सुनिविष्टस्य लोकस्य कुतो रूपविपर्ययः ॥"

(*Anka 1, sloka 16.*)

"दुद्दिणविणट्ठजोह्णा ळत्ती वट्टइ णिमीळिआकाळा ।
संपाउदप्पसुत्ता णीळणिवषणा जहा गोवी ॥"

(*Anka 3, sloka 19.*)

The benedictory verse in *Madhyamavyâyoga* runs as follows:—

"पायात् स वोऽसुरवधूहृदयावसादः
पादो हरेः कुवलयामलखङ्गनीलः ।
यः प्रोद्यतस्त्रिभुवनैकमणे रराज
वैदूर्यसंक्रम इवाम्बरसागरस्य ॥"

(*Sloka 1.*)

Here we have the description of a *Râkshasa*:—

"सिंहास्यः सिंहदंष्ट्रो मधुनिभनयनः स्निग्धगम्भीरकण्ठो
बभ्रुभ्रूः श्येननासो द्विरदपतिहनुर्दीर्घविश्लिष्टकेशः ।
व्यूढोरा वज्रमध्यो गजवृषभगतिर्लम्बपीनांसबाहुः
सुव्यक्तं राक्षसीजो विपुलबलयुतो लोकवीरस्य पुत्रः ॥"

(*Sloka 26.*)

Here is *Karna's* reply to *Salya* who objects to the giving away of his armour and ear-ring (from *Karnabhâra*):—

"शिक्षा क्षयं गच्छति कालपर्ययात्
सुबद्धमूला निपतन्ति पादपाः ।
जलं जलस्थानगतं च शुष्यति
हुतं च दत्तं च तथैव तिष्ठति ॥"

(*Sloka 19.*)

The description of *Duryodhana* who had fallen down with his thigh broken (from *Ûrubhanga*) is contained in this verse:—

"श्रीमान् संयुगचन्दनेन रुधिरेणार्द्रानुलिप्तच्छवि-
भूसंसर्पणरेणुपाटलभुजो बालव्रतं ग्राहितः ।
निर्वृत्तेऽमृतमन्थने क्षितिधरान्मुक्तः सुरैः सासुरै-
राकर्षन्निव भोगमर्णवजले श्रान्तोज्झितो वासुकिः ॥"

(*Sloka 28.*)

The sorrowful words of *Lakshmana* as *Sita* faces the ordeal by fire **(अग्निप्रवेश)** (from *Abhishekanâtaka*) are quoted below:—

"विज्ञाय देव्याः शौचं च श्रुत्वाचार्यस्य शासनम् ।
धर्मस्नेहान्तरे न्यस्ता बुद्धिर्दोलायते मम ॥"

(*Anka 6, sloka 21.*)

*Râvana's* words expressing that he need not anticipate any dangerous consequences from *Râma* are contained in:—

"कथं लम्बसटः सिंहो मृगेण विनिपात्यते ।
गजो वा सुमहान् मत्तः सृगालेन निहन्यते ॥"

(*Anka 3, sloka 19.*)

*Râma's* utterance in *Pratimânâtaka* may be noted:—

"आरब्धे पटहे स्थिते गुरुजने भद्रासने लङ्घिते
स्कन्धाच्चारणनम्यमानवदनप्रच्योतितोये घटे ।
राज्ञाहूय विसर्जिते मयि जनो धैर्येण मे विस्मितः
स्वः पुत्रः कुरुते पितुर्यदि वचः कस्तत्र भो विस्मयः ॥"

(*Anka 1, sloka 4.*)

The prostration of *Râma* at his father's feet immediately after he came to know of the royal mandate for his coronation as narrated to *Sita*, is described in these words:—

"समं बाष्पेण पतता तस्योपरि ममाप्यधः ।

पितुर्मे क्लेदितौ पादौ ममापि क्लेदितं शिरः ॥"

(*Anka 1, sloka 5.*)

The words addressed to *Râma* by *Lakshmaṇa* who got extremely angry at *Kaikeyi's* conduct are as follows:—

"यदि न सहसे राज्ञो मोहं धनुः स्पृश मा दया
स्वजननिभृतः सर्वोऽप्येवं मृदुः परिभूयते ।
अथ न रुचितं मुञ्च त्वं मामहं कृतनिश्चयो
युवतिरहितं कर्तुं लोकं यतश्छलिता वयम् ॥"

(*Anka 1, sloka 18.*)

*Bharata's* feelings of surprise at the prospective sight of his own people may be quoted:—

"पतितमिव शिरः पितुः पादयोः स्निग्धतेवास्मि राज्ञा समुत्थापित-
स्त्वरितमुपगता इव भ्रातरः क्लेदयन्तीव मामश्रुभिर्मातरः ।
सदृश इति महानिति व्यायतश्चेति भृत्यैरिवाहं स्तुतः सेवया
परिहसितमिवात्मनस्तत्र पश्यामि वेषं च भाषां च सौमित्रिणा ॥"

(*Anka 3, sloka 3.*)

*Bharata's* reply to *Kaikeyi* may also be cited:—

"वयमयशसा चीरेणार्यो नृपो गृहमृत्युना
प्रततरुदितैः कृत्स्नायोध्या मृगैः सह लक्ष्मणः ।
दयिततनयाः शोकेनाम्बाः स्नुषाध्वपरिश्रमै-
र्धिगिति वचसा चोग्रेणात्मा त्वया ननु योजिताः ॥"

(*Anka 3, sloka16.*)

Here is another saying of *Bharata*:—

"तत्र यास्यामि यत्रासौ वर्तते लक्ष्मणप्रियः ।
नायोध्या तं विनायोध्या सायोध्या यत्र राघवः ॥"

(*Anka 3, sloka 22.*)

The benedictory verse in the work (of unknown name) runs as follows:—

"पादः पायादुपेन्द्रस्य सर्वलोकोत्सवः स वः ।
व्याविद्धो नमुचिर्येन तनुताम्रनखेन खे ॥"

So far with reference to verses. The superior excellence of sentences which are not subject to the restrictions of versification is everywhere to be observed in these *Rûpakas*. It really surpasses in grandeur the style of other works and is incomparable. A perusal of the work will make this clear; hence no illustrations are given.

*Bhasa's* followers.

There is no path trodden by great poets like *Kâlidâsa*, but is pioneered by *Bhâsa*. There are many points of similarity to *Bhâsa's* works in *Abhijnânasâkuntala* the best known work of *Kâlidâsa*, who has attained unrivalled fame as the prince of poets, since the era of *Vikramâditya*.

For example, a *sloka* in the fourth Act of *Abhishekanâtaka* runs thus:—

"यस्यां न प्रियमण्डनापि महिषी देवस्य मन्दोदरी
स्नेहाल्लुम्पति पल्लवान् न च पुनर्वीजन्ति यस्यां भयात् ।
वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमा
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम् ॥"

There is a similar verse in the fourth Act of *Sâkuntala*:—

"पातुं न प्रथमं व्यवस्यति पयो युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥"

Here it may be observed that there is not only similarity of ideas between the two *slokas* but the very same sweet and melodious expressions, such as 'प्रियमण्डनापि', 'स्नेहात्', 'पल्लवान्', 'सेयं', are used by *Kâlidâsa* also. Again in the first act of *Bâlacharita*, the following verse has reference to *Devaki*, who, having entrusted the child to *Vâsu-*

*deva* seems, as it were, to proceed towards two different directions; her body going towards her place of confinement, but her mind towards the child:—

"हृदयेनेह तत्राङ्गैर्द्विधाभूतेव गच्छति ।
यथा नभसि तोये च चन्द्रलेखा द्विधा कृता ॥"

There is a striking similarity between this verse and the following one in the first Act of *Sâkuntala*:—

"गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥"

The following line in the first Act of *Svapnavâsavadatta*, viz.,

"विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्ययाः",

is, by a slight change, rendered thus in the first Act of *Sâkuntala*:—

"विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः".

Similarly, there may be observed several other points of resemblance between the works of *Bhâsa* and those of *Kâlidâsa*.

Again, such striking similarities can be clearly noticed in *Bhavabhûti's* works also, on a close examination. As instances may be taken ~~from~~ *Âtreyî's* discourse in the 2nd Act of *Uttararâmacharita* which closely follows that of the *Brahmachâri* in the first Act of *Svapnavâsavadatta*, as also that of the *Vidyâdhara* in the sixth Act which follows a similar discourse in the sixth Act of *Abhishekanâtaka*.

Again, the use of *Dandaka* in the fifth Act of *Mâlatîmâdhava* bears a strong analogy to the *Dandaka* form employed in the fifth Act of *Avimâraka*.

*Mrichchhakatika* compared.

The work, known as *Mrichchhakatika* which is reputed to be older than *Kâlidâsa's* plays not only contains many points of similarity to *Bhasa's* works, but the very same sentences are taken wholesale from the one in the other. Thus, several verses and sentences in the *Chârudattanâtaka* are either literally transcribed, or, are made to undergo but slight alteration in *Mrichchhakatika*.

A verse in the first Act of *Chârudattanâtaka* runs thus:—

"यासां बलिर्भवति मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विभक्तपुष्पः ।
तास्वेव पूर्वबलिरूढयवाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥"

The corresponding verse in *Mrichchhakatika* is the following:—

"यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।
तास्वेव संप्रति विरूढतृणाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥"

Again, in the third Act of *Chârudattanâtaka*, the following *sloka* occurs:—

"मार्जारः प्लवने वृकोऽपसरणे श्येनो गृहालोकने
निद्रा सुप्तमनुष्यवीर्यतुलने संसर्पणे पन्नगः ।
माया वर्णशरीरभेदकरणे वाग् देशभाषान्तरे
दीपो रात्रिषु संकटे च तिमिरं वायुः स्थले नौर्जले ॥"

The third Act of *Mrichchhakatika* also contains a *sloka* corresponding to it:—

"मार्जारः क्रमणे मृगः प्रसरणे श्येनो गृहालुञ्चने
सुप्तासुप्तमनुष्यवीर्यतुलने श्वा सर्पणे पन्नगः ।
माया रूपशरीरवेषरचने वाग् देशभाषान्तरे
दीपो रात्रिषु संकटेषु डुडुमो वाजी स्थले नौर्जले ।"

Similarly in the fourth Act of *Chârudatta* and *Mrichchhakatika* respectively, there are the following *slokas*:—

"विषादस्रस्तसर्वाङ्गी संभ्रमोत्फुल्ललोचना ॥
मृगीव शरविद्धाङ्गी कम्पसे चानुकम्पसे ॥"

"विषादस्रस्तसर्वाङ्गी संभ्रमभ्रान्तलोचना ।
नीयमाना भुजिष्यात्वं कम्पसे नानुकम्पसे ॥"

These are the words of *Sûtradhâra* in *Chârudatta*:—

"किण्णु खु अज्ज पच्चूस एव्व गेहादो णिक्खन्तस्स बुभुक्खाए पुक्खरपत्तपडिदजळबिन्दू विअ चळचळाअन्ति विअ मे अक्खीणि । (परिक्रम्य) जाव गहं गच्छिअ जाणामि किण्णुखु संविधा विहिदा ण वेत्ति । एदं अह्माणं गेहं । जाव पविसामि ।"

The same idea is expressed in *Mrichchhakatika* in the following terms:—

"............चिरसङ्गीदोवासणेण सुक्खपोक्खरणाळाइं विअ मे बुभुक्खाए मिळाणाइं अङ्गाइं । ता जाव गेहं गदुअ आणामि अत्थि किं पि कुटुम्बिणीए उववादिअं ण वेत्ति । (परिक्रम्यावलोक्य च) एदं तं अह्माणं गेहं, ता पविसामि ।"

At the beginning of the second Act of *Chârudatta*, there occur the following sentences:—

"**गणिका** — तदो तदो ।
**चेटी** — अह्महे ण किञ्चि मए भणिदं । किं तदो तदो त्ति ।
**गणिका** — हञ्जे ! किं मए मन्तिदं ॥"

Similar expressions occur in *Mrichchhakatika* also:—

"**वसन्तसेना** — हञ्जे ! तदो तदो ।
**चेटी** — अज्जुए ! ण किंपि मन्तोसि । किं तदो तदो ।
**वसन्तसेना** — किं मए भणिदं ।
**चेटी** — तदो तदो त्ति ॥"

Again, the third Act of *Chârudatta* contains the following:—

"**चारुदत्तः**—वयस्य ! वीणा नामासमुद्रोत्थितं रत्नम् । कुतः,"

"**विदूषकः**—कामं पसंसेदु भवं। मम खु दाव गाअन्तो मणुस्सो इत्थिआ वि पठन्ती उभअं आदरं ण देदि। गाअन्तो दाव मणुस्सो रत्तसुमणावेढ्ढिदो विअ पुरोहिदो दिढं ण सोभइ। इत्थिआ वि पठन्ती छिण्णणासा विअ धेणुआ अदिविरूवा होइ।"

Similarly in *Mrichchhakatika*:—

"**चारुदत्तः**—अहो अहो साधु साधु रेभिलेन गीतम्। वीणा हि नामासमुद्रोत्थितं रत्नम्। कुतः"

"**विदूषकः**—मम दाव दुवेहिं जेव्व हस्सं जाअदि। इत्थिआए सक्कअं पठन्तीए मणुस्सेण अ काअलिं गाअन्तेण। इत्थिआ दाव सक्कअं पठन्ती दिण्णणवणस्सा विअ गिट्ठी अहिअं सुसुहाआदि। मणुस्सो वि काअलिं गाअन्तो सुक्खसुमणोदामवेढ्ढिदो वुड्ढपुरोहिदो विअ मन्तं जवन्तो दिढं मे ण रोअदि।"

The fourth Act of *Chârudatta* has the following:—

"**सज्जलकः**—मदनिके! किं न पर्याप्तं, द्वितीयमप्यनार्यं करिष्यामि। न खल्वत्र शस्त्रेण कश्चित् परिक्षतो व्यापादितो वा।"

Similar words in *Mrichchhakatika* are:—

"**शर्विलकः**—मदनिके! भीते सुते न शर्विलकः प्रहरति। तन्मया न कश्चिद् व्यापादितो नापि परिक्षतः।

Another sentence in the fourth Act of *Chârudatta* runs as follows:—

"**सज्जलकः**—आर्यचारुदत्तेनास्मि प्रेषितः, यस्तावदलङ्कारो मम हस्ते निक्षिप्तः, स त्वयं भोगमलिनतया गृहस्यासान्निध्यात् कौटुम्बिकानां दुरारक्षः। तद् गृह्यतामिति।"

The analogous passage in *Mrichchhakatika* runs thus:—

"**शर्विलकः**—सार्थवाहस्त्वां विज्ञापयति—जर्जरत्वाद् गृहस्य दूरक्षमिदं भाण्डम्। तद् गृह्यतामिति॥"

Many other analogous passages can be easily pointed out. Again, the plot in both the plays centres round *Chârudatta.* It thus follows that the one should be the basis of the other. It may, however, be appropriate to observe that *Chârudattanâtaka* alone can be the source wherefrom *Mrichchhakatika* is derived; for it is only in latter-day plays that the work and its author are specifically mentioned. While the *Prastâvana* in *Mrichchhakatika* contains a description of the poet and his work, the same is wanting in *Chârudatta*, which only goes to show that the former is of a subsequent date. However, *Mrichchhakatika* contains many excellent passages which are not met with in *Chârudatta.* Hence, the proper inference seems to be that the short play of *Chârudatta* has been amply enlarged by the addition of fine passages, which renders the plot even more interesting, and has, under the name of *Mrichchhakatika*, become famous as the work of *Sûdraka.* Thus, *Mrichchhakatika* being almost another version of *Chârudatta*, it is but proper that learned men should regard it as a very ancient work and its author as belonging to a very remote period, under the false impression that he is the original author, though his work simply consisted in rebuilding with old materials. There is no authority to say that *Sûdraka* must have lived prior to *Kâlidâsa*, but it is certain that he is a predecessor of *Vâmana*, the author on Rhetoric for he expressly says in his *Kâryâlankârasûtravritti*:—

"शूद्रकादिरचितेषु प्रबन्धेष्वस्य (श्लेषाख्यगुणस्य) भूयान् प्रपञ्चो दृश्यते।"

Thus, it is clear that the poetical eminence of *Bhâsa* has been the mainstay of poets like *Kalidâsa* and *Sûdraka.*

Certain peculiar uses.

Here and there in these *Nâtakas*, are to be met with, certain forms which are repugnant to the strict rules of Grammar and Rhetoric. They are like the following:—

१. "अपरिचयासु न श्लिष्यते मे मनासि।" (*Svapna. Anka 1.*)

२. "आपृच्छामि भवन्तौ।" (*Svapna. Anka 1*).

३. "साधुजनहस्तं गतैषा नोत्काण्ठिष्यति।" (*Svapna. Anka 1.*)

४. "हस्त्यश्वरथपदातीनि विजयाङ्गानि ।" (*Pratijnâ. Anka 4.*)

५. "दैवप्रामाण्याद् भ्रश्यते वर्धते वा ।" (*Pratijnâ. Anka 1.*)

६. "यावदहमुच्छ्वसामि ।" (*Pratijnâ. Anka 1.*)

७. "कथमगणितपूर्वं द्रक्ष्यते........श्रोष्यते ।" (*Pratijnâ. Anka 1.*)

८. "प्रथममभिकाङ्क्षे हि मनसा" (*Pratijnâ Anka 2.*)

९. "जित इति पुनरेनं रुष्यते वासुभद्रः ।" (*Pancharâtra. Anka 2.*)

१०. "स्त्रीगतां पृच्छसे कथाम्" (*Pancharâtra. Anka 2.*)

११. "वीजन्तो मलयानिला अपि" (*Abhisheka. Anka 3.*)

१२. "सीतां समाश्वासितुम्" (*Abhisheka. Anka 7.*)

१३. "ऋज्वायतां च मुखतोरणलोलमालाम्" (*Svapna. Anka 5.*)

The words underlined above have this characteristic, *viz.*, that *Âtmanepada* is used for *Parasmaipada* and vice versa. Again, the plural is used for the singular in हस्त्यश्वरथपदातीनि, there is no dropping of शप् in उच्छ्वसामि, while णिच् is dropped in वीजन्तः and समाश्वासितुम्. The च in ऋज्वायतां च is used only for the sake of completing the line. These may, however, be explained away by *Pâninîyas.* Thus, in the second example, आ may not be taken as a preposition, in the third, *Âtmanepada* need not necessarily be used; in the fourth, the expression may be taken as a *Bahuvrîhi* compound (हस्त्यश्वरथसहिताः पदातयः येषु तानीति). In the sixth, गणकार्य is not always operative, in the eleventh वीज् may be taken to belong to the class of पच् to which अ is affixed and क्विप् is added on in the sense of आचार; in the twelfth णिच् is affixed to समाश्वासवत् and is generally dropped; in the thirteenth, च may be used in the sense of इव, and the rest may in some way be explained by resorting to कर्मवद्भाव. In truth, it is no fault of our venerable poet who is a perfect master of the language and who lived long before the time of

*Chânakya*, the contemporary of *Nanda*, not to have followed the rules of *Pânini* who was only a pupil of *Varshopâdhyâya*, another contemporary of *Nanda*; on the other hand, it only adds grace to its extreme antiquity. It is also possible that some errors might have crept in, as these works which were out of circulation would have passed through the hands of several unlettered scribes.

In the same way, even the defects pointed out by *Bhâmaha* in *Pratijnânâtikâ*, to which we have already referred, may be explained.

*Bhâmaha* considers it extremely improbable that such an illustrious king as *Vatsarâja* would have been unaware of his enemies' stratagem in resorting to the fictitious elephant, either through the absence of spies or the negligence of his ministers; or that he would not have been murdered by his infuriated enemies, while he was alone and had fallen into their hands or that he could not have distinguished a fictitious elephant by day. The first statement does not require any serious refutation, for it is quite possible that even a far-sighted king, with all his spies and his devoted and efficient ministers, in his great eagerness for elephant-hunt, might disregard his ministers' advice and proceed alone in haste.

Again, a prudent and generous-minded minister like *Sâlankâyana* could well have prevented the attempted murder of *Vatsarâja* on the grounds that it would be more pleasing to his lord if such a valiant and honourable foe could be taken captive, and that it would be a very mean act to kill a captive who was already stupefied by blows. It must be, for these reasons, that *Bhâmahâchârya* refers to the fictitious elephant as the last ground of his objections; but on a minute examination, even this is of no account, for in *Pratijnânâtikâ*, *Hamsaka*, in reference to the deception practised upon *Vatsarâja*, speaks:—

"तदो दिउणं विअ अद्धाणं गच्छिअ साळुक्खच्छाआए सवण्णणट्ठणीळदाए परुम्मासिदेहि असरीरविणिक्खित्तेहि विअ दन्तजुअळेहि सूइदो धणुस्सदमत्तेण विअ दिट्ठो सो दिव्ववारणपडिच्छन्दो ।"

It is clear from the above passage that the place where the fictitious black elephant was posted, was covered with such a dense forest of *sâla* trees that it was hardly possible to distinguish an elephant. While even the existence of the elephant was left to be inferred only through the tusks, it were hardly likely to conceive, even by day, that it might possibly be a fictitious one. It is, however, clear from *Prâtijnânâtika* that *Vatsarâja's* elephant-hunt must have taken place about mid-day. From this, *Bhâmaha* concludes that, however dense the trees might be, even there, darkness cannot co-exist with mid-day light, that it is thus impossible that an elephant could not be distinguished owing to the density of *sâla* trees; and that such a statement is a mere exaggeration. On the other hand, it seems to us that actual experience shows that there could be total darkness on account of the density of *sâla* trees, in spite of broad day-light. If, on the other hand, as narrated in *Kathâsaritsâgara* which is a close copy of *Brihatkathâ*, evening twilight had begun to set in, *Vatsarâja's* erroneous impression becomes more probable; but this ingenious statement does nowhere appear in *Pratijnânâtika*, and it is quite possible that the author of *Brihatkathâ* might have conceived this statement for the sake of repelling *Bhâmaha's* criticisms and *Somadevabhatta* having come across it in *Brihatkathâ* would have inserted it in his own work, *Kathâsaritsâgara*†. Everything has thus been rendered clear.

Want of circulation.

That there was a very wide circulation of *Bhâsa's* plays in *Kâlidâsa's* time is evident from his own statement "प्रथितयशसां भाससौमिल्लकविपुत्रादीनाम्". On the other hand, its circulation had become extremely rare during the time of *Sûdraka*. Thus is to be accounted for the readiness displayed by *Sûdraka* in *Mrichchhakatika* to collect together the various sentences to be found in *Chârudatta*; hence also the wide circulation of *Mrichchhakatika* which is merely an adaptation of another's words. These

---

* II. Lambaka, IV. Taranga, XVIII. Sloka.

"गान्धर्वदत्ताचित्तत्वात् सन्ध्याध्वान्तवशाच्च सः ।
न तं वनगतं राजा मायागजमलक्षयत् ॥"

plays have thenceforward gradually disappeared from circulation and have now become extinct. How is this to be explained? Not, indeed, by the absence of merits, for it has already been shown that the works are so exuberant with rich ideas and are couched in such felicitous language, as to attract the emulation of poets like *Kâlidâsa.*

Nor can the existence of the aforesaid irregularities of language which are not capable of an easy explanation possibly be the reason; for, even at a time when *Pânini's* Grammar which has become so famous with the aid of such works like the *Vârtika* and *Mahâbhâshya* has attained a very wide currency, when again, there have come into existence authoritative works on Rhetoric composed by *Medhavin*, *Bhâmaha* and others, and when scholars have imbibed the habit of closely following them, similar irregularities are met with here and there, as in *Kâlidâsa's* works which have in no way become less popular on that account.

Nor again, can it be due to the omission to mention the poet's name, for *Raghuvamsa*, *Sisupâlavadha* and other works wherein the auther's name is not mentioned, have a wide currency.

Hence, some mysterious reason must be assigned for their non-circulation, on the strength of which must be explained the total disappearance till now, except in name, of works like the *Sangraha* of *Âchârya Vyâdi* and the *Brihatkathâ* of *Gunâdhya.*

The simultaneous acquisition of a number of *Bhâsa's* very ancient works which have long since been given up for lost, will not fail to be the source of astonishment and delight to all the world, and they will be regarded as an invaluable treasur by Sanskrit and Archæological scholars. It further generates in me some hope that many other works of *Bhâsa* may be unearthed, for it is nowhere calculated that *Bhâsa's* works are so many in number.

Our profound gratitude is due to the proprietors of Manalikkara Matham and especially to its eldest member, the venerable Sankaranârâyanar for the invaluble help they have rendered in preserving these somewhat worn-out but precious manuscripts which contain a rare collection of *Bhâsa's* works. My hearty thanks are also due to the astrologer Govinda

Pisharodi and to Messrs. Subrahmanya Mûttatu (of Puthial) and Krishna Tantri (of Tazhaman) for their kindness in allowing the use of their manuscripts.

Conclusion.

So far, the nature, authorship and the exact period of these Nâtakas have been dealt with. These are the important aspects that have here been considered, and what materials there might be for purposes of ancient history can be ascertained only after a critical study of these works, and is hence left to be discussed after their publication. We first publish *Svapnavâsavadatta*, since it comes first in this collection of dramas and affords the basis for the determination of the authorship etc. of the other plays. *Pratijnâyaugandharâyana* and other works will also be published in due course.

Trivandrum,
11–4–1912.

T. GANAPATI SÂSTRÎ.

# PREFACE.

Following the Subhâshita of *Râjasekara*, this *Nâtaka* has been styled '*Svapnavâsavadatta.*' It can also be termed *Svapnavâsavadattâ* (f) or *Svapnanâtakam* (n). The manuscript of *Svapnavâsavadatta* obtained from the *Manalikkara* Matham is designated क, that sent by Pandit *Anantâchârya* ख, while that of *Krishna* Tantri ग. The differences in reading between the first two are noted at the foot of the page, while those of the third are separately mentioned at the end of the book. The letters that we have inserted in the place of those that have been lost are enclosed within brackets. Wherever any letter seems inappropriate, it is followed by an interrogation mark, and the appropriate letter is inserted, the whole being enclosed in brackets, and in the absence of an appropriate letter, the inappropriate one followed by a quotation-mark is enclosed in brackets. No manuscript contains the छाया for Prakritam and we have supplied it with due care. Foot-notes are added, wherever necessary. The differences in reading in ग Grantha and the words which are lost in क Grantha but are obtained from ख Grantha are noted in the Appendix (at the end of the book).

T. GANAPATI SASTRI.

॥ श्रीः ॥

# स्वप्नवासवदत्तादिनाटकचक्रस्योपोद्घातः ।

---

एतद्राज्यान्तर्गतस्य **पद्मनाभपुर**स्योपकण्ठस्थिताद् **मणलिक्कर**मठात् प्रपूर्वतरके हायने संस्कृतग्रन्थान् संगृह्णन् कतिपयनाटकशालिनं कमपि तालपत्रसम्पुटमहमुपलब्धवान् । तत्र पत्राणि १०५, प्रतिपृष्ठं १० पङ्क्तयः, २० ग्रन्थाश्च । लिपिस्तु प्राचीनकैरली । तत्र त्रिशताधिकवर्षवृद्धत्वप्रतिभासेऽपि पत्रेषु न जीर्णिकृतोऽक्षरविलोपः, ऋते द्वादशभ्य आदितः पत्रैकदेशेभ्यः । अर्थोदारगम्भीरता गद्यपद्यवाक्यरचनारीतिर्वा तत्रार्षमहाग्रन्थसाधारणी प्रसिद्धमहाकविग्रन्थापेक्षया रोचनीयतरा च मे प्रतिभाता । ततः परीक्षिते तस्मिन् ग्रन्थसम्पुटे दश रूपकाण्यधोदत्तनामान्यदृश्यन्त—

अपूर्वनाटकचक्रलाभः ।

| | |
|---|---|
| १ स्वप्ननाटकम् । | ६ अविमारकम् । |
| २ प्रतिज्ञानाटिका । | ७ बालचरितम् । |
| ३ पञ्चरात्रम् । | ८ मध्यमव्यायोगः । |
| ४ चारुदत्तम् । | ९ कर्णभारम् । |
| ५ दूतघटोत्कचम् । | १० ऊरुभङ्गम् । |

एकादशमपि किञ्चिद् रूपकमुपक्रान्तं तत्रास्ति, यदीयप्रथमपत्रोत्तरपृष्ठस्यार्धपङ्क्तावस्थाने लिपिः परिसमापिता । अथापरस्यां यात्रायां **कटिच्चुरुत्ति**समीपवासिनः **कैलासपुरा**भिजनस्य **गोविन्दपिषारोटि**नाम्नो ज्यौतिषिकस्य सकाशाद**भिषेक**नाटकं **प्रतिमा**नाटकमिति द्वे नाटके पूर्वोक्तनाटकसजातीये अधिगते । एतदधिगमानन्तरमेवैनयोरेकैकस्य प्रतिरूपस्य राजकीयग्रन्थशालायामपि सत्तावधारिता । एतेऽपि ग्रन्थसम्पुटास्तालपत्रात्मकाः केरलीयलिपयस्त्रिचतुरशतवर्षवृद्धसम्भाव्याश्च । एवं तावददृष्टचराण्यश्रुतचराणि च द्वादश (अथवा त्रयोदश) रूपकाण्युपलब्धानि ।

आदौ नान्दी प्रयुज्य 'नान्द्यन्ते सूत्रधार' इति कथनं नाटकेष्वौत्सर्गिकम्। एषु तु 'नान्द्यन्ते ततः प्रविशति सूत्रधार' इत्यादावुपक्रम्य ततो मङ्गलश्लोको लिख्यत इत्येषा रीतिः; प्रस्तावनापदस्थाने च स्थापनापदस्य प्रयोगः। शूद्रककालिदासादिप्रणीतेषु सर्वेषु नाटकेषु प्रस्तावनायां कविकाव्ययोर्नामनिर्देशः केषुचित् स्तुतिश्च प्रस्तावनाङ्गतया वितन्येते; एतेषु पुनर्नाटकेषु कवेः काव्यस्य वा नाममात्रमपि स्थापनायां न कीर्त्यते। 'अस्माकं *राजश्रेष्ठः कृत्स्नां भूमिं प्रशास्तु' इति वा 'अस्माकं राजा भूमिं प्रशास्तु' इति वा काचित् प्रार्थनामुद्रा भरतवाक्ये नियमेन निवेशिता। अन्ते अमुकनाटकमवसितमिति नाटकनामधेय सर्वत्र लिखितमस्ति। त इमे व्यतिरेका अधस्तादुदाहृतेभ्यः स्वप्ननाटकादीनामारम्भ—समाप्तिवाक्येभ्यः स्पष्टमवगन्तुं शक्याः। तत्र यथा स्वप्ननाटकस्य (आरम्भवाक्यम्)—

नाटकप्रस्थानरीतिः।

"(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

उदयनवेन्दुसवर्णावासवदत्ताबलौ बलस्य त्वाम्।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम्॥

एवमार्यमिश्रान् विज्ञापयामि। अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते। अङ्ग! पश्यामि।

(नेपथ्ये)

उस्सरह उस्सरह अय्य! उस्सरह।

**सूत्रधारः**—भवतु विज्ञातम्।

भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः।
धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः॥

(निष्क्रान्तः)

**स्थापना।**"

---

* 'राजसिंहः प्रशास्तु नः' इत्यत्र राजसिंहपदं राजश्रेष्ठार्थकम्। पल्लवेषु राजसु कश्चिद् राजसिंहसंज्ञो राजा यद्यपि श्रुतः, तथापि तस्य क्रैस्तवर्षारम्भोत्तरकालिकत्वाद् नाटकचक्रकर्तुः क्रैस्तवर्षारम्भप्राक्तनतायाः साधयिष्यमाणत्वाच्च न राजसिंहशब्दस्य तत्परत्वं युक्तमित्यभिप्रायः।

(समाप्तिवाक्यम्)—

"(भरतवाक्यम्)

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥

षष्ठोऽङ्कः ।

स्वप्ननाटकमवसितम् ॥"

---

यथा **प्रतिज्ञानाटिकायाः** (आरम्भवाक्यम्)—

" (नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

पातु वासवदत्तायो महासेनोऽतिवीर्यवान् ।
वत्सराजस्तु नाम्ना सशक्तिर्यौगन्धरायणः ॥

(परिक्रम्य नेपथ्याभिमुखमवलोक्य)

आर्ये! इतस्तावत् ।

(प्रविश्य)

**नटी**—अय्य! इअह्मि ।

**सूत्रधारः**—आर्ये! गीयतां तावत् किञ्चिद्वस्तु । ततस्तव गीतप्रसाधिते रङ्गे वयमपि प्रकरणमारभामहे । आर्ये! किमिदं चिन्त्यते ननु गीयते ।

**नटी**—अज्ज! मए सिविणे णादिकुळस्स अस्सत्थं विअ दिट्ठं । ता इच्छामि अय्येण कुसळविण्णाणणिमित्तं कञ्चि पुरुसं पेक्खिदुं ।

**सूत्रधारः**—बाढम् ।

पुरुषं प्रेषयिष्यामि व्यक्तमात्माहिते क्षमम् ।

(नेपथ्ये)

सालक! सज्जस्त्वम् ।

**सूत्रधारः—**

पुरुषं प्रेषयत्येष यथा यौगन्धरायणः ॥

(निष्क्रान्तौ)

**स्थापना ।"**

---

(समाप्तिवाक्यम्)—

"(भरतवाक्यम्)

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥

(निष्क्रान्ताः सर्वे)

**चतुर्थोऽङ्कः ।**

**प्रतिज्ञानाटिकावसिता** ॥"

---

यथा **पञ्चरात्रस्य** (आरम्भवाक्यम्)—

"(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः—**

द्रोणः पृथिव्यर्जुनभीमदूतो यः कर्णधारः शकुनीश्वरस्य ।
दुर्योधनो भीमयुधिष्ठिरः स पायाद् विराडुत्तरगोऽभिमन्युः ॥

(परिक्रम्य) एवमार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

अहो कुरुराजस्य यज्ञसमृद्धिः ।

**सूत्रधारः**—भवतु विज्ञातम् ।

सर्वैरन्तःपुरैः सार्धं प्रीत्या प्राप्तेषु राजसु ।
यज्ञो दुर्योधनस्यैष कुरुराजस्य वर्तते ॥

(निष्क्रान्तः)

**स्थापना ।"**

---

(समाप्तिवाक्यम्)—

"**द्रोणः**—

इत्यर्थं वयमानीताः पञ्चरात्रोऽपि वर्तते ।
धर्मेणावर्जिता भिक्षा धर्मेणैव प्रदीयताम् ॥

**दुर्योधनः**—

बाढं दत्तं मया राज्यं पाण्डवेभ्यो यथापुरम् ।
मृतेऽपि हि नराः सर्वे सत्ये तिष्ठन्ति तिष्ठति ॥

**द्रोणः**—

हन्त सर्वे प्रसन्नाः स्मः प्रवृद्धकुलसङ्ग्रहाः ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥

(निष्क्रान्ताः सर्वे)

**तृतीयोऽङ्कः ।**

**अवसितं पञ्चरात्रम् ॥**"

---

यथा **चारुदत्तनाटकस्य** (आरम्भवाक्यम्)—

"(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—किण्णुखु अज्ज पच्चूस एव्व णिक्खन्तस्स बुभुक्खाए पुक्खरपत्तपडिदजळबिन्दू विअ चञ्चळाअन्ति विअ मे अक्खीणि । (परिक्रम्य) जाव गेहं गच्छिअ जाणामि किण्णुहु संविधा विहिदा ण वेत्ति । एदं अह्माणं गेहं । जाव पविसामि । (प्रविश्यावलोक्य) जह ळोहीपरिवट्टणकाळसारा भूमी णेउब्भामणसुगन्धो विअ गन्धा सुणिमित्तं विअ परिब्भमन्तो वाडव-स्सअजणो । किण्णुखु संविधा विहिदा । आदु बुभुक्खाए ओदणमअं विअ जीवळोअं पेक्खामि । अय्ये ! इदो दाव ।

**नटी**—अय्य ! इअह्मि । अय्य ! दिट्ठिआ खु सि आअदो ।

**सूत्रधारः**—अय्ये ! किं अत्थि अह्माणं गेहे को वि पादरासो ।

**नटी**—अत्थि ।

**सूत्रधारः**—चिरं जीव । एवं सोभणाणि दत्तिआ होहि ।

**नटी**—अय्य! तुवं एव्व पडिवाळेन्ती चिट्ठामि ।

**सूत्रधारः**—अय्ये! किं अब्भत्थिदं ।

**नटी**—अत्थि ।

**सूत्रधारः**—एवं देवा तुमं अस्सासन्तु । अय्ये! किं किं ।

**नटी**—घिदं, गुळं, दहि, तण्डुला अत्थि ।

**सूत्रधारः**—एदं सव्वं अह्माणं गेहे अत्थि ।

**नटी**—णाहि णाहि, अन्तळावणे ।

**सूत्रधारः**—(सरोषम्) आः अणय्ये! एवं दे आसा छिन्दीअदु । अभावं च गमिस्ससि । अहं चण्डप्पवादलण्डुओ विअ वरण्डा पचादादो दूरं आरोविअ पाडिदोह्मि ।

**नटी**—मा भाआहि मा भाआहि । मुहुत्तअं पडिवाळेदु अय्यो । सव्वं सज्जं भविस्सादि । ळद्धं णाम एदं । अज्ज मम उववासस्स अय्यो सहाओ होदु ।

**सूत्रधारः**—किण्णामहेओ अय्याए उववासो ।

**नटी**—अभिरूववदी णाम ।

**सूत्रधारः**—किं अण्णजादीए ।

**नटी**—आम ।

**सूत्रधारः**—सव्वं दाव चिट्ठदु । कोणु दाणि अय्याए उववासस्स उवदेसिओ ।

**नटी**—इमिणा पडिवस्सएण चुण्णगोट्ठेण ।

**सूत्रधारः**—साहु चुण्णगोट्ठ! साहु ।

**नटी**—जइ अय्यस्स अणुग्गहो, तदो इच्छेअं अह्मारिसजणजोग्गं कञ्चि बह्मणं णिमन्तेदुं ।

**सूत्रधारः**—धम्मिट्ठो खु णिओओ। तेण पादरासो वि मे भविस्सदि। जइ एव्वं पविसदु अय्या। अहं वि अह्मारिसजणजोग्गं कञ्चि बह्मणं अण्णेसामि।

**नटी**—जं अय्यो आणवेदि। (निष्क्रान्ता)

**सूत्रधारः**—किण्णुखु दरिद्दबह्मणं ळभेअं। (विलोक्य) एसो अय्यचारुदत्तस्स वअस्सो अय्यमेत्तेओ णाम बह्मणो इदो एव्व आअच्छदि। जाव उवणिमन्तेमि। (परिक्रम्य) अय्य! णिमन्तिदो सि। आमन्तणस्स मा दरिद्दत्ति अवमण्णेहि। सम्पण्णं अह्निदव्वं भविस्सदि। घिदं, गुळं, दहिं, तण्डुला अ सव्वं अत्थि। आविअ दक्खिणामासआणि भविस्सन्ति।

(नेपथ्ये)

अण्णं अण्णं णिमन्तेदु दाव भवं। दरिद्दओ दाव अहं।

**सूत्रधारः**—

घिदगुळदहिसुसमिद्धं धूविअसूवोपदंससंभिण्णं।
सक्कारदत्तमिट्ठं भुञ्जीअदु भक्तमय्येण॥

(निष्क्रान्तः)

**स्थापना**।"

---

(समाप्तिवाक्यम्)—

"**गणिका**—एहि इमं अळङ्कारं गह्निअ अय्यचारुदत्तं अहिसरिस्सामो।

**चेटी**—अज्जुए! तह। एदं पुण अभिसारिआसहाअभूदं दुद्दिणं उण्णमिदं।

**गणिका**—हदासे! मा खु वड्ढावेहि।

**चेटी**—एदु एदु अज्जुआ।

(इति निष्क्रान्ते)

**चतुर्थोऽङ्कः**।

**अवसितं चारुदत्तम्**॥"

---

यथा **दूतघटोत्कचस्य** (आरम्भवाक्यम्)—

"(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

नारायणस्त्रिभुवनैकपरायणो वः
पायादुपायगतयुक्तिकरः सुराणाम् ।
लोकत्रयाविरतनाटकतन्त्रवस्तु-
प्रस्तावनप्रतिसमापनसूत्रधारः ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

भो! भोः! निवेद्यतां निवेद्यतां तावत् ।

**सूत्रधारः**—भवतु विज्ञातम् । एष खलु संशप्तकानीकनिर्वाहके जनार्दनसहाये धनञ्जये तदनन्तरमुपगतभीष्मवधामर्षितैर्धार्तराष्ट्रैः परिवार्य निहतः कुमारोऽभिमन्युः । तथाहि—

यान्त्यर्जुनप्रत्यभियानभीता यतोऽर्जुनस्तां दिशमीक्षमाणाः ।
नराधिपाः स्वानि निवेशनानि सौभद्रबाणाङ्कितनष्टसंज्ञाः ॥

(निष्क्रान्तः)

**स्थापना** ।"

---

(समाप्तिवाक्यम्)—

"**घटोत्कचः**—पितामह! एष गच्छामि ।

**धृतराष्ट्रः**—पौत्र! गच्छ गच्छ ।

**घटोत्कचः**—भो भो राजानः! श्रूयतां जनार्दनस्य पश्चिमसन्देशः ।

धर्मं समाचर कुरु स्वजनव्यपेक्षां
यत् काङ्क्षितं मनसि सर्वमिहानुतिष्ठ ।

जात्योपदेश इव पाण्डवरूपधारी
सूर्यांशुभिः सममुपैष्यति वः कृतान्तः ॥

(इति निष्क्रान्ताः सर्वे)

**दूतघटोत्कचमवसितम्** ॥"

---

**यथाविमारकस्य** (आरम्भवाक्यम्)—

"(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

उत्क्षिप्तां सानुकम्पं सलिलनिधिजलादेकदंष्ट्राग्ररूढा-
माक्रान्तामाजिमध्ये निहतदितिसुतामेकपादावधूताम् ।
सम्भुक्तां प्रीतिपूर्वं स्वभुजवशगतामेकचक्राभिगुप्तां
श्रीमान् नारायणस्ते प्रदिशतु वसुधामुच्छ्रितैकातपत्राम् ॥

(नेपथ्याभिमुखमवलोक्य) आर्ये! इतस्तावत् ।

(प्रविश्य)

**नटी**—अय्य! इअह्मि ।

**सूत्रधारः**—आर्ये! तव वदनजनितकौतूहलेन स्मितेन निवेदित इवान्तर्गतो भावः । ननु किञ्चिद् वक्तुकामासि ।

**नटी**—को एत्थ विम्हओ, अय्यो भावञ्ञो त्ति ।

**सूत्रधारः**—तेन हि स्वैरमभिधीयताम् ।

**नटी**—इच्छेमि अय्येण सह उय्याणं गन्तुं । अत्थि मे तहिं हत्थिआकरणीअं णिअमकय्यं ।

(नेपथ्ये)

भूतिक! त्वमप्युद्यानं गच्छ कुरङ्गीरक्षणार्थं म(द)भावस्थो ह्यञ्जनगिरिः ।

**सूत्रधारः**—आर्ये! ननु भवत्या श्रुतम् उद्यानं गता राजपुत्रीति । तस्मात् सम्प्रति सर्वतः परिगुप्तानि भवन्त्युद्यानानि । प्रतिनिवृत्तायां राजसुतायां स्वैरं गमिष्यावः ।

**नटी**—जं अय्यो आणवेदि ।

(निष्क्रान्तौ)

**स्थापना** ।"

---

(समाप्तिवाक्यम्)—

"(भरतवाक्यम्)

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥

(निष्क्रान्ताः सर्वे)

**षष्ठोऽङ्कः** ।

**अविमारकस्य षष्ठोऽङ्कः । एषोऽवसितश्च** ॥"

---

यथा बालचरितस्य (आरम्भवाक्यम्)—

"(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

शङ्खक्षीरवपुः पुरा कृतयुगे नाम्ना तु नारायण-
स्त्रेतायां त्रिपदार्पितत्रिभुवनो विष्णुः सुवर्णप्रभः ।
दूर्वाश्यामनिभः स रावणवधे रामो युगे द्वापरे
नित्यं योऽञ्जनसन्निभः कलियुगे वः पातु दामोदरः ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

अहं गगनसञ्चारी ।

**सूत्रधारः**—भवतु विज्ञातम् ।

पतत्यसौ पुष्पमयी च वृष्टिर्नदन्ति तूर्याणि च देवतानाम् ।
द्रष्टुं हरिं वृष्णिकुले प्रसूतमभ्यागतो नारद एष तूर्णम् ॥

(निष्क्रान्तः)"

---

(समाप्तिवाक्यम्)—

"(भरतवाक्यम्)

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥

पञ्चमोऽङ्कः ।

अवसितं बालचरितम् ॥"

---

यथा मध्यमव्यायोगस्य (आरम्भवाक्यम्)—

"(ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

पायात् स वोऽसुरवधूहृदयावसादः
पादो हरेः कुवलयामलखङ्गनीलः ।
यः प्रोद्यतस्त्रिभुवनैकमणे रराज
वैदूर्यसंक्रम इवाम्बरसागरस्य ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

भोस्तात! कोनुखल्वेषः ।

**सूत्रधारः**— भवतु विज्ञातम् ।

भोःशब्दोच्चारणादस्य ब्राह्मणोऽयं न संशयः ।
त्रास्यते निर्विशङ्केन केनचित् पापचेतसा ॥

(नेपथ्ये)

भोस्तात! कोनुखल्वेषः ।

**सूत्रधारः**—हन्त दृढं विज्ञातम् । एष खलु पाण्डवमध्यमस्यात्मजो हिडिम्बारणिसम्भूतो राक्षसाग्निरकृतवैरं ब्राह्मणजनं वित्रासयति । भोः! कष्टं

कष्टं खलु पत्नीसुतपरिवृतस्य ब्राह्मणस्य वृत्तान्तः । अत्र हि—

श्रान्तैः सुतैः परिवृतस्तरुणैः सदारो
वृद्धो द्विजो निशिचरानुचरः स एषः ।
व्याघ्रानुसारचरितो वृषभः सधेनुः
सन्त्रस्तवत्स इव (चा)कुलतामुपैति ॥

(निष्क्रान्तः)

स्थापना ।"

---

(समाप्तिवाक्यम्)—

"**भीमसेनः**—हिडिम्बे! इतस्तावत् । वत्स घटोत्कच! इतस्तावत् । तत्रभवन्तं केशवदासमाश्रमपदद्वारमात्रमपि सम्भावयिष्यामः ।

यथा नदीनां प्रभवः समुद्रो यथाहुतीनां प्रभवो हुताशः ।
यथेन्द्रियाणां प्रभवं मनोऽपि तथा प्रभुर्नो भगवानुपेन्द्रः ॥

(निष्क्रान्ताः सर्वे)

**मध्यमव्यायोगोऽवसितः** ॥"

---

यथा **कर्णभारस्य** * (समाप्तिवाक्यम्)—

"**कर्णः**—अये शब्द इव श्रूयते किन्नुखल्विदम् ।

शङ्खध्वनिः प्रलयसागरतुल्यघोषः
कृष्णस्य वा ननु भवेत् स तु फल्गुनस्य ।
नूनं युधिष्ठिरपराजयकोपितात्मा
पार्थः करिष्यति यथाबलमद्य युद्धम् ॥

---

* अस्य स्थापनाप्रकरणं न दृश्यते ।

शल्यराज! यत्रासावर्जुनस्तत्रैव चोद्यतां मम रथः ।

**शल्यः**—बाढम् ।

(निष्क्रान्तौ)

**कर्णभारमवसितम्** ॥"

---

यथा **ऊरुभङ्गस्य** (आरम्भवाक्यम्)—

"(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

भीष्मद्रोणतटां जयद्रथजलां गान्धारराजह्रदां
कर्णद्रौणिकृपोर्मिनक्रमकरां दुर्योधनस्रोतसम् ।
तीर्णः शत्रुनदीं शरासिकतां येन प्लवेनार्जुनः
शत्रूणां तरणेषु वः स भगवानस्तु प्लवः केशवः ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

एते स्मो भो! एते स्मः ।

**सूत्रधारः**— भवतु विज्ञातम् ।

.... .... .... .... .... .... .... .... .... .... .... .... ....

.... .... .... .... .... .... .... .... .... .... .... .... ....

**स्थापना** ।"

---

(समाप्तिवाक्यम्)—

"**बलदेवः**—

याम्येष सज्जनधनानि तपोवनानि

**धृतराष्ट्रः**—

पुत्रप्रणाशविफलं हि धिगस्तु राज्यम् ।

**अश्वत्थामा—**

यातोऽद्य सौप्तिकवधोद्यतबाणपाणि-
र्गां पातु नो नरपतिः शमितारिपक्षः ॥

(निष्क्रान्ताः सर्वे)

**ऊरुभङ्गमवसितम् ॥"**

---

यथानवगतनामकस्य नाटकस्यारम्भवाक्यानि—

"(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः—**

पादः पायादुपेन्द्रस्य सर्वलोकोत्सवः स वः ।
व्याविद्धो नमुचिर्येन तनुताम्रनखेन खे ॥

एवमार्यमिश्रान् विज्ञापयामि। किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

भो भोः प्रतिहाराधिकृताः! महाराजो दुर्योधनः समाज्ञापयति ।

**सूत्रधारः—** भवतु विज्ञातम् ।

उत्पन्ने धार्तराष्ट्राणां विरोधे पाण्डवैः सह ।
पर्येति मन्त्रशालायां भृत्यो दुर्योधनाज्ञया ॥

(निष्क्रान्तः)

**स्थापना।"**

---

(ततः प्रविशति काञ्चुकीयः)

भो भोः प्रतिहाराधिकृताः! महाराजो दुर्योधनः समाज्ञापयति—अद्य सर्वपार्थिवैः सह मन्त्रयितुमिच्छामि । तदाहूयन्तां सर्वे राजान इति । अये अयं महाराजो दुर्योधन इत एवाभिवर्तते । य एषः,

श्यामो युवा सितदुकूलकृतोत्तरीयः
सच्छत्रचामरवरो रचिताङ्गरागः ।

श्रीमान् विभूषणमणिद्युतिरञ्जिताङ्गो
नक्षत्रमध्य इव पर्वगतः शशाङ्कः ॥

(ततः प्रविशति दुर्योधनः)

**दुर्योधनः**—

उद्धूतरोषमिव मे हृदयं सहर्षं
प्राप्तं रणोत्सवमिमं सहसा विचिन्त्य ।
इच्छामि पाण्डवबले वरवारणाना-
मुत्कृत्तदन्तमुसलानि मुखानि कर्तुम् ॥

**काञ्चुकीयः**—जयतु महाराजः । महाराजशासनात् समानीतं सर्वराजमण्डलम् ।

**दुर्योधनः**—सम्यक् कृतम् । प्रविश त्वमवरोधनम् ।

**काञ्चुकीयः**—यथाज्ञापयति महाराजः । (निष्क्रान्तः)

**दुर्योधनः**—आर्यौ वैकर्णवर्षदेवौ! उच्यताम्—अस्ति ममैकादशाक्षौहि-(णी? णि) । बलसमुदयस्यास्य कः सेनापतिर्भवितुमर्हतीति । किमाहतुर्भवन्तौ—महान् खल्वयमर्थः । मन्त्रयित्वा वक्तव्यमिति । सदृशमेतद्, आगम्यतां मन्त्रशालामेव प्रविशामः । आचार्य! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । पितामह! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । मातुल! अभिवादये । प्रविशतु भवान् मन्त्रशालाम् । आर्यौ! वैकर्णवर्षदेवौ! प्रविशतां भवन्तौ । भो भोः सर्वक्षत्रियाः! स्वैरं प्रविशन्तु भवन्तः । वयस्य! कर्ण! प्रविशावस्तावत् । (प्रविश्य) आचार्य! एतदासनमास्यताम् । पितामह! एतदा(सनमा)स्यताम् । मातुल! एतदासनमास्यताम् । आर्यौ वैकर्णवर्षदेवौ! आसातां भवन्तौ । भो भोः सर्वक्षत्रियाः! स्वैरमासतां भवन्तः । किमिति किमिति महाराजो नास्त इति । अहो सेवाधर्मः । भवत्वय*"

यथा अभिषेकनाटकस्य (आरम्भवाक्यम्)—

"(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः**—

यो गाधिपुत्रमखविघ्नकराभिहन्ता
युद्धे विराधखरदूषणवीर्यहन्ता ।

* एतदक्षरावधिक एव ग्रन्थ उपलब्धः ।

दर्पोद्यतोल्बणकबन्धकपीन्द्रहन्ता
पायात् स वो निशिचरेन्द्रकुलाभिहन्ता ॥

एवमार्यमिश्रान् विज्ञापयामि । (परिक्रम्यावलोक्य) अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

सुग्रीव! इत इतः ।

.... .... .... .... .... .... .... .... .... .... ....

.... .... .... .... .... .... .... .... .... .... ....

स्थापना ।"

---

(समाप्तिवाक्यम्) —

"(भरतवाक्यम्)

भवन्त्वरजसो गात्रः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ।

(निष्क्रान्ताः सर्वे)

**सप्तमोऽङ्कः ।**

**अभिषेकनाटकं समाप्तम् ॥"**

---

**यथा च प्रतिमानाटकस्य** (आरम्भवाक्यम्) —

"(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः** —

सीताभवः पातु सुमन्त्रतुष्टः सुग्रीवरामः सहलक्ष्मणश्च ।
यो रावणार्यप्रतिमश्च देव्या विभीषणात्मा भरतोऽन्यसर्गः ॥

(नेपथ्याभिमुखमवलोक्य) आर्ये! इतस्तावत् ।

(प्रविश्य)

**नटी** — अय्य! इअह्मि ।

**सूत्रधारः**—आर्ये! इममेवेदानीं शरत्कालमधिकृत्य गीयतां तावत्।

**नटी**—अय्य! तह। (गायति)

**सूत्रधारः**—अस्मिन् हि काले,

चरति पुलिनेषु हंसी काशांशुकवासिनी सुसंहृष्टा।

(नेपथ्ये)

अय्य! अय्य!

**सूत्रधारः**—भवतु विज्ञातम्।

मुदिता नरेन्द्रभवने त्वरिता प्रतिहाररक्षीव॥

(निष्क्रान्तौ)

**स्थापना**।"

---

(समाप्तिवाक्यम्)—

" (भरतवाक्यम्)

यथा रामश्च जानक्या बन्धुभिश्च समागतः।
तथा लक्ष्म्या समायुक्तो राजा भूमिं प्रशास्तु नः॥

(निष्क्रान्ताः सर्वे)

**सप्तमोऽङ्कः।**

**प्रतिमानाटकं समाप्तम्॥**"

---

नाटकानां मिथः संवादः।

एषां नाटकानामुपदर्शितेन नाटकान्तरविलक्षणेन प्रस्थानेन न केवलं, किन्तु केषुचिन्नाटकेषु वाक्यानुपूर्व्यैक्येनापि परस्परसाम्यमुदाहृतवाक्येभ्यः प्रकाशते। तथाहि—"एवमार्यमिश्रान् विज्ञापयामि। अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते। अङ्ग! पश्यामि" इत्येषानुपूर्वी प्रतिज्ञा-चारुदत्त-अविमारक-प्रतिमा-कर्णभारनाटकान्यपहाय सर्वेष्वन्येषु दृश्यते।

"इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥"

इति भरतवाक्यानुपूर्वी **स्वप्ननाटकबालचरितयोः** समाना ।

"भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥"

इत्यानुपूर्वी **प्रतिज्ञा-अविमारक-अभिषेकनाटकेषु** लक्ष्यते । "इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः" इत्यानुपूर्वी **पञ्चरात्रे**ऽप्यस्ति ।

मङ्गलश्लोके नाटकीयप्रधानपात्रनामविन्यासः **स्वप्ननाटक** इव **प्रतिज्ञा-पञ्चरात्रप्रतिमा**नाटकेषूपलभ्यते ।

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥"

इत्ययं श्लोकश्चारुदत्तप्रथमाङ्क इव **बालचरित**प्रथमाङ्के दृश्यते । "किं वक्ष्यतीति हृदयं परिशङ्कितं मे" इत्ययं श्लोकपादः **स्वप्नवासवदत्तषष्ठाङ्क** इव **अभिषेकनाटक**चतुर्थाङ्क उपलभ्यते । "धर्मस्नेहान्तरे न्यस्ता" इत्ययं श्लोकपादः **प्रतिज्ञानाटिका**द्वितीयाङ्क **इवाभिषेक**नाटकषष्ठाङ्केऽप्यस्ति । एवञ्जातीयका अन्येऽप्युक्तिभङ्गीनां संवादा एषु नाटकेषु दृश्याः ।

नाटककर्तृनिर्णयः ।

एवं परस्परात्यन्तसंवाददर्शनाद् एतैर्नाटकैरेककविकर्तृकैर्भाव्यमिति, प्रस्तावनायां कविकाव्यनामानाख्यानात् तदाख्याननियमारम्भात् प्रागेवैतान्युद्भूतानीति, उदाहरिष्यमाणकविताग़ुणसमृद्ध्यनुरोधादेषां कर्ता सुप्रसिद्धः पुरातनः कश्चिद् महाकविर्भवितुमर्हतीति च मम बुद्धिरुत्पन्ना। अनया **वत्सराजगतवासवदत्ताविषयस्वप्नवर्णनात् स्वप्ननाटकमिदमाचार्याभिनवगुप्तपादा**दिप्राचीनग्रन्थेभ्यो नाममात्रेणास्माभिर्विज्ञातं यत् **स्वप्नवासवदत्तं** नाम नाटकं, तदेव नामैकदेशग्रहगृहीतं स्यादिति सम्भावनया चास्मिन् **स्वप्ननाटका**दिनाटकचक्रे भक्तिबहुमानावसामान्यौ मे सञ्जातौ । **स्वप्नवासवदत्तस्य** हि अलभ्यमित्यद्ययावदवधारितस्य प्रणेता श्री**भासमहाकवि**रित्ययमर्थः

"भासनाटकचक्रेऽपिच्छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥"

इति **राजशेखरश्लोकात्** **सूक्तिमुक्तावलिगतादवगत** एव सर्वलोकस्य । एष एव खलु महाकविः **मालविकाग्निमित्रप्रस्तावनायां** "प्रथितयशसां **भाससौमिल्लकविपुत्रादीनां** प्रबन्धानतिक्रम्य" इति **श्रीकालिदासेन**,

"सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥"

इति **हर्षचरिते भट्टबाणेन** चोपश्लोकितः । एवमेषां **भासकृ**तित्वे सिद्धे "सूत्रधारकृतारम्भैरि"ति **भट्टबाणोक्तं** सूत्रधारकृतारम्भत्वं भासकृतीनामसाधारण एव धर्मः कामं प्रत्येतुं शक्यः, एषु सर्वेष्वपि नाटकेषु "नान्द्यन्ते ततः प्रविशति सूत्रधार" इत्येव ग्रन्थारम्भस्य **कालिदासादिनाटकविलक्षणस्य** दर्शनात् ।

आदर्शान्तरलाभः ।

तत इमान्यपूर्वाणि संमुद्रय प्रकाशयितुमिच्छता मया तेषु सुप्रसिद्धनाम्नि **स्वप्नवासवदत्ते** बहुषु पत्रेष्वक्षराणां त्रुटिततया, **चारुदत्तस्य** चतुर्थाङ्कावधिकत्वेनासमग्रतया, **कर्णभारस्य** स्थापनादिविकलतया च तेषां नाटकानां समग्रस्वरूपसम्पादनाय मातृकान्तरान्वेषणे प्रयत्नः कृतः । **भारते** **युरोपदेशे** च तदर्थं बहून् पण्डितान् लेखद्वारेणायाचिषि । चिरप्रनष्टानां **भासकृ**तीनामीदृशविकलैकमातृकालाभ एव परमलाभो मन्तव्य इति बोधयन्तो यद्यपि बहवः प्रतिलेखा आयाताः, तथापि **स्वप्ननाटकस्य** **प्रतिज्ञायौगन्धरायणस्य** चैकमादर्शान्तरमशुद्धमपि दिष्ट्या समग्रं मम हस्तं प्राप्तम् । तद्धि **बङ्गलूरपुरे** पुरातनवस्तुविचारकार्यालयपण्डितेन श्रीमता आ-सूरि-**अनन्ताचार्येण** मत्प्रियसुहृदा कुतश्चित् केरलीयतदादर्शस्य प्रतिशरीरात् प्रतिलेखितं कृपया मह्यं प्रेषितम् । अस्य **स्वप्ननाटकादर्शस्यान्ते** "**स्वप्नवासवदत्ता** समाप्ता" इत्यस्मत्सम्भावितचरनामधेयानुगुणमेव नामधेयं लिखितं दृष्टम् । **प्रतिज्ञानाटिकादर्शस्यान्ते** च "**प्रतिज्ञायौगन्धरायणम्**" इति पूर्णनामधेयं लिखितम् ।

अस्योपमातृकालाभस्यानुपदं क्वचिद् यात्रायां **हरिप्पाट्टुपुरे पुत्तियल्-सुब्रह्मण्य**शर्मसकाशाद् **अविमारक**स्य मातृकान्तरं किञ्चिल्लब्धम् । एता उपमातृका आश्रित्य त्रीणि नाटकानि संशोधितानि । अन्यानि तु संशोध्यन्ते । अस्य नवादर्शस्य साहाय्यात् **स्वप्नवासवदत्त**स्याविकलं शरीरं निष्पन्नमासीत् । तेनाहमेतन्नाटकविषयस्य मत्परिश्रमस्य चारितार्थ्यं समर्थयन् नवादर्शदानोपकारिणि **श्रीमदनन्ताचार्य**महाशयेऽतीव कृतज्ञतां वहामि । अथ **स्वप्नवासवदत्त**स्योपक्रान्ते मुद्रणे अन्याप्युपमातृका **चेङ्कन्नूरताळमण्मठकृष्णतन्त्रि**सकाशादधिगता, तथा **प्रतिज्ञायौगन्धरायणस्याभिषेकनाटकस्य प्रतिमानाटकस्य** पूर्वोक्ताज्ञातनामकनाटकांशस्य च ।

भासकालविचारः ।

११५९—तमक्रैस्ताब्दस्थितेन वन्द्यघटीय**सर्वानन्देनामरकोशटीकासर्वस्वे** "शृङ्गारवीरकरुणे"ति श्लोकव्याख्याप्रसङ्गात् "स्वदिशमात्मसात्कर्तुम् **उदयनस्य पद्मावतीपरिणयो**ऽर्थशृङ्गारः **स्वप्नवासवदत्ते**, तृतीयस्तस्यैव **वासवदत्तापरिणयः** कामशृङ्गार" इति वदतास्मदीयमिदं **स्वप्नवासवदत्तं** स्मृतमित्यसन्दिग्धं, तस्यैवार्थशृङ्गारस्यात्र *वर्णनात् । **श्रीमदाचार्याभिनवगुप्तपादैः** क्रैस्ताब्दनवमशतकस्थितैः प्रणीतायां **भरतनाट्यवेदविवृतौ स्वप्नवासवदत्तायाः** स्मरणमस्ति "क्वचित् क्रीडा यथा **स्वप्नवासवदत्तायाम्** (अध्या. १. श्लो. ७४) इति । **दरिद्रचारुदत्त**मित्यपि किञ्चिन्नाटकनाम तत्र स्मर्यते । तन्मन्ये, एतदेव **चारुदत्तनाटकं** स्यात् ।

**ध्वन्यालोककर्तुरानन्दवर्धनात्** क्रैस्ताब्दनवमशतकस्थितात् प्राचीनस्य **वामनस्य काव्यालङ्कारसूत्रवृत्तौ** पञ्चमाधिकरणस्य द्वितीयाध्याये **स्वप्न**नाटकचतुर्थाङ्कस्थं पद्यमुदाहृतं—

"शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि! ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥"

इति । तस्यैव पञ्चमाधिकरणद्वितीयाध्याये **प्रतिज्ञायौगन्धरायणचतुर्थाङ्कगतस्य**

---

* कथावस्तुसंक्षेपो दृश्यताम् ।

पद्यस्य चतुर्थः पाद उदाहृतः "यो भर्तृपिण्डस्य कृते न युध्येत्" (श्लो. ४) इति। तथा तत्पञ्चमाधिकरणस्य प्रथमाध्याये चारुदत्तनाटकप्रथमाङ्कगतः श्लोक उदाहृतः—

"यासां बलिर्भवति मद्गृहदेहलीनां हंसैश्च सारसगणैश्च विलुप्तपूर्वः।
तास्वेव पूर्वबलिरूढयवाङ्कुरासु बीजाञ्जलिः पतति कीटमुखावलीढः॥"

इति।

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥"

इत्यस्य बालचरितप्रथमाङ्के चारुदत्तप्रथमाङ्के च स्थितस्य श्लोकस्य पूर्वार्धं कैस्ताब्दषष्ठशतकभाजा दण्डिना काव्यादर्शस्य द्वितीयपरिच्छेद उदाहृतं—

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
इतीदमपि भूयिष्ठमुत्प्रेक्षालक्षणान्वितम्"॥ २२१॥

इति।

अस्ति ध्वन्यालोकलोचने (पृ. १९२. उ. ३)

"सञ्चितपक्ष्मकपाटं नयनद्वारं स्वरूपतडनेन(?)।
उद्घाट्य सा प्रविष्टा हृदयगृहं मे नृपतनूजा॥"

इति काचिदार्या स्वप्नवासवदत्तगततयोदाहृता। सा मन्ये स्वप्नवासवदत्तगता न भवति, अस्मदीयेषु त्रिष्वपि स्वप्नवासवदत्तादर्शेष्वनुपलम्भात्। किञ्च, काञ्चित् प्रत्यग्रदृष्टां स्त्रियं प्रति प्रतिनवाभिलाषोदयः श्लोके तस्मिन् प्रतीयते। स वासवदत्ताविषयो वा स्यात् पद्मावतीविषयो वा। नाद्यः, परिणीतचरवासवदत्ताप्रवासविप्रलम्भस्यैव तत्र प्रकृतत्वात्। नापि द्वितीयः, यदृच्छागतस्य प्रार्थनामन्तरेण दर्शकेन स्वयंदत्तां पद्मावतीं प्रतिगृहीतवतो वासवदत्ताशोकस-

---

१ 'भक्तपुष्पः।' इति चारुदत्ते।

तत्तदश्रमानहृदयस्य **वत्सराजस्य पद्मावती**विषयाभिलाषवर्णनं प्रति तत्र काप्य-नवकाशात्। तेन **स्वप्नवासवदत्ते** तस्य श्लोकस्य निवेशयोग्यं स्थानमलभमानस्य चिरनिष्प्रचारत्वमूलः पाठभ्रंशोऽपि नानुमातुं शक्यः। एवं **साहित्यदर्पणस्य** षष्ठपरिच्छेदे ८५–तमकारिकाविवरणे

"उत्साहातिशयं वत्स! तव बाल्यं च पश्यतः।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः॥"

इति यः श्लोको **बालचरित**गतत्वेनोदाहृतः, स कामं **रामबालचरित**-गतो भवेत्। अत एव **दर्पण**व्याख्याता "दाशरथिं प्रति भार्गवस्योक्तिरियम्" इति तं व्याचष्टे। अस्मदीयं तु **बालचरितं** कृष्णविषयमिति तस्य श्लोकस्यात्रादर्शनं युक्तमेव।

**भामहकृतकाव्यालङ्कारस्य** चतुर्थपरिच्छेदे कुतश्चित् काव्यान्न्यायविरोध उदाहृत्य निरूपितः। यथा—

"विजिगीषुमुपन्यस्य वत्सेशं वृद्धदर्शनम्।
तस्यैव कृतिनः पश्चादभ्यधाचारशून्यताम्॥ ४०॥
अन्तर्योधशताकीर्णं सालङ्कायननेतृकम्।
तथाविधं गजच्छद्म नाज्ञासीत् स स्वभूगतम्॥ ४१॥
यदि वोपेक्षितं तस्य सचिवैः स्वार्थसिद्धये।
अहो नु मन्दिमा तेषां भक्तिर्वा नास्ति भर्तरि॥ ४२॥
शरा दृढधनुर्मुक्ता मन्युमद्भिररातिभिः।
मर्माणि परिहृत्यास्य पतिष्यन्तीति कानुमा॥ ४३॥
हतोऽनेन मम भ्राता मम पुत्रः पिता मम।
मातुलो भागिनेयश्च रुषा संरब्धचेतसः॥ ४४॥
अस्यन्तो विविधान्याजावायुधान्यपराधिनम्।
एकाकिनमरण्यान्यां न हन्युर्बहवः कथम्॥ ४५॥
नमोऽस्तु तेभ्यो विद्वद्भ्यो येऽभिप्रायं कवेरिमम्।
शास्त्रलोकावपास्यैव नयन्ति नयवेदिनः॥ ४६॥

सचेतसो वनेभस्य चर्मणा निर्मितस्य च ।
विशेषं वेद बालोऽपि कष्टं किन्नु कथन्नु तत् ॥ ४७ ॥"

इति । अस्या **भामह**समालोचनायाः सर्वो विषयः **प्रतिज्ञानाटिकायां** वर्तते । अपिच **प्रतिज्ञानाटिकायाः** प्रथमाङ्के यानि " अणेण मम भादा हदो, अणेण-मम पिदा, अणेण मम सुदो" इति प्राकृतवाक्यानि, तानि " हतोऽनेन मम भ्राता मम पुत्रः पिता मम " इति श्लोकरूपेणानूदितानि **भामहेना**स्मिन् न्याय-विरोधसमालोचनप्रकरणे । अतो **भामहेन प्रतिज्ञानाटिकै**वानुसंहितेत्यूहितुं शक्यते । नाटिकाया नामधेयं तु तत्कालातिप्रसिद्धिवशादकथितमपि सुज्ञानमिति धिया **भामहेन** न निर्दिष्टं स्यात् । अस्य **भामह**समालोचनाविषयभूतस्य कथा-वस्तुनो **बृहत्कथा**यामपि सत्त्वाद् **भामहेन** सैवानुसंहिता, न तु **प्रतिज्ञानाटि**-केति तु न शङ्कनीयं, "हतोऽनेन मम भ्राते"ति **भामहे**नानूद्यमानस्य वाक्यस्य **प्रतिज्ञायां** प्रत्यक्षतयोपलब्धेः, **बृहत्कथायां** तस्य सद्भावकल्पनायां प्रमाणा-भावात् । वस्तुतस्तु **भामह**कालात् परत एव **बृहत्कथाया** निष्पत्तिरित्यनुपदं वक्ष्यामः । स चायं **भामहः कालिदासात्** प्राचीनः प्रतिभाति । तेन हि **मेधा-वी, रामशर्मा, अश्मकवंशं, रत्नाहरणम्, अच्युतोत्तरम्** इत्यस्मदविदितानि कविकाव्यनामानि गृहीतानि । सर्वलोकविदितस्य तु श्री**कालिदासस्य** तत्काव्यस्य वा लोकोत्तरस्य कस्यचिन्न नामधेयं गृहीतम् । **भामहाचार्यश्चेत् कालिदा-सकाव्य**मद्रक्ष्यत्, तदवश्यं निरदेक्ष्यद् अतिप्रसिद्धत्वादनिर्देशेऽपि विषयवि-चारादिद्वारेण **प्रतिज्ञानाटिका**मिव वास्मरिष्यत् । यद्यपि

"अयुक्तिमद् यथा दूता जलभृन्मारुतादयः ।
तथा भ्रमरहारीतचक्रवाकशुकादयः ॥ ४२ ॥

अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः ।
कथं दूत्यं प्रपद्येरन्निति युक्त्या न युज्यते ॥ ४३ ॥

यदि चोत्कण्ठया तत्तदुन्मत्त इव भाषते ।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते ॥ ४४ ॥ "

(भाम. काव्याल. परि. १)

इति युक्तायुक्तत्वविचारे मेघमारुतादिदूतीकरणं विषयतया **भामहेन** प्रसङ्गितं, तथापि तावता **मेघदूत**काव्यं स जानातीति न युक्तं कल्पयितुम् । तथासति ह्यस्तनेन केनापि कविना प्रणीतं **शुकसन्देश**मपि स जानातीति कल्पनीयमापद्येत । अतो, मन्ये, केषुचित् काव्येषु विप्रलम्भादिप्रसङ्गे मारुतचन्द्रमेघाद्यचेतनद्वारेण भ्रमरचक्रवाकशुकाद्यव्यक्तवाक्प्राणिद्वारेण च प्रियजनाय विरहिणां सन्देशप्रेषणं क्वचित् क्वचिद् यद् वर्ण्यते, तदनुन्मादावस्थायां नेष्यत इत्येतदेव सामान्यत आचार्यः श्लोकैरेभिरुपदिष्टवान् , तच्चेदमाचार्योपदेशतात्पर्यं हृदि निधायैवौचित्यवेदी **कालिदासो मेघदूत**स्यारम्भे तद्दूतीकरणानौचित्यमाशङ्क्य परिजहार—

"धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥" (पूर्वमेघ. ५)

इति श्लोकेन । एवं तावत् सिद्धं **भामहस्य कालिदासात्** प्राचीनत्वम् । ननु च **कालिदासेन मेघदूते** "प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्" (पूर्वमेघ. ३०) इति **कालिदास**कालवर्तिनाम् **अवन्ति**जनपदग्रामवृद्धानाम् **उदयन**कथोदाहरणनिपुणतोक्त्या **उदयन**संज्ञ**वत्सराज**द्रष्टृत्वप्रतीतेः **उदयनः कालिदास**सन्निकृष्टपूर्वकालो भवितुं युक्तः । तत् कथं **भामहो वत्सराज**स्यात्मकालसन्निकर्षं लेशतोऽप्यसूचयन् प्रत्युत तमितिहासमात्राधीतप्रायं स्फोरयन् **कालिदासात्** प्राचीनः स्यात् । नैतत् । **मालविकाग्निमित्र**प्रस्तावनायां हि "प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमान" इति **भासस्य** प्रथितयशस्त्वमाह **कालिदासः**, पुराणत्वं च भासकाव्यस्य प्रत्येति । "पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ॥" इति । तदुभयस्वरसाद् **भासस्य** कीर्तेश्चिरकालक्रमसिद्धा परा काष्ठा **कालिदास**काले स्थितेति गम्यते । सा चावरतस्तत्कृतीनां सप्ताष्टवर्षशतकप्रचारमन्तरेण न सम्भाव्येति कृत्वा **कालिदासापेक्षम्** अतिप्राचीनत्वं **भासस्य** न्याय्यं,

सुतरां तु **भासनाटकनायकस्योदयनस्ये**ति न कथञ्चिदप्युदयनस्य **कालिदास**-सान्निकृष्टपूर्वकालत्वशङ्काया अवकाशः। "उदयनकथाकोविदग्रामवृद्धान्" इत्येतच्च, **अवन्ति**ग्रामवृद्धाः स्वानुपलब्धमेवेतिहासाद्यधीतं स्वजनपदनिर्वृत्तम् **उदयन**कथा-द्भुतं पुरावृत्तप्रेम्णा वृद्धभावसहभुवा शंसन्त आद्रियन्त इत्येवमभिप्रायं, न तु तेषा**मुदयन**द्रष्टृत्वानुमापकम्। अतः सुस्थं **भामह**स्य **कालिदास**प्राचीनत्वम्। अपिच, **भामहः काव्यालङ्कारे** कथाख्यायिकयोः स्वरूपं निरूपयन् **बृहत्कथां** नानुसन्धत्ते। सा हि कथाविशेषत्वात् तत्प्रसङ्गे स्मर्तुमुचिता। तथा च **दण्डी का-व्यादर्शे** कथाख्यायिकाप्रस्तावे "भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्" इति **बृहत्कथां** स्मरति। तेन मन्ये, **भामह**काले **बृहत्कथा** नावर्ततेति। तदुत्तरकाल एव तास्ताश्चमत्कारिणीरुच्चावचाः कथा इतिहासतः **स्वप्नवासव-दत्ता**दिकाव्यतो लोकतश्चोच्चित्य स्वयं कल्पयित्वा च **बृहत्कथां** नाम कथाभाण्डा-गारं नूनं **गुणाढ्यो** जग्रन्थ। **गुणाढ्यश्च** शकप्रवर्तक**शालिवाहन**समकाल इति **शालिवाहन**तोऽपि **भामहः** प्राचीनो भवन् क्रैस्ताब्दारम्भप्राक्तनं प्रथमं वर्षशतकं संस्पृशति। **भामहा**दपि तु जरत्तरतामर्हन्नस्मन्नाटकचक्रकविः क्रैस्तप्राक्तने तृतीये द्वितीये वा वर्षशतके निवेशमवश्यं लभते।

किञ्च, राज्यतन्त्रविद्याचार्यः **कौटिल्य** इति **चाणक्य** इति च पर्यायवा-च्यो **विष्णुगुप्तश्चन्द्रगुप्त**समानकालः क्रैस्तप्राचीने चतुर्थे वर्षशतके स्थित इति सुप्रसिद्धम्। तत्प्रणीते **कौटिलीयार्थशास्त्रे** मन्त्रिपुरोहितकरणीयस्य योधयुद्ध-प्रोत्साहनस्य प्रकारोपदेशावसरे "तुल्यवेतनोऽस्मि, भवद्भिः सहभोग्यमिदं राज्यं, मयाभिहितः परोऽभिहन्तव्यः' इति, वेदेष्वप्यनुश्रूयते— समाप्तदक्षिणानां यज्ञा-नामवभृथेषु 'सा ते गतिर्या शूराणामि'ति, अपीह श्लोकौ भवतः—

"यान् यज्ञसङ्घैस्तपसा च विप्राः स्वर्गैषिणः पात्रचयैश्च यान्ति।
क्षणेन तानप्यतियान्ति शूराः प्राणान् सुयुद्धेषु परित्यजन्तः॥"

"नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत् तस्य मा भून्नरकं च गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत्॥"

इति मन्त्रिपुरोहिताभ्यामुत्साहयेद् योधान्" (कौटि. अर्थ. अधि. १०. अध्या. ३)

---

१. 'लैः सुपू', २. 'स' इति प्रतिज्ञानाटिकायाम्।

इति दृश्यते । शूरस्य सद्गतिर्युद्धे प्राणांस्त्यक्तवतः यज्ञतपस्साध्यकामलाभः विजयिनः *समर्हणा च लोके सुलभा इति, राज्ञः पिण्डदातुरर्थे युद्धमकुर्वन् पापीयान् भवतीति चोदाहृतवाक्यानामभिप्रायः । तत्र "नवं शरावम्" इत्येष श्लोकः **प्रतिज्ञायौगन्धरायणस्य** चतुर्थाङ्के भटान् प्रति कस्यचित् प्रोत्साहनवाक्यतया निवेशितः । अस्य श्लोकस्य किम**र्थशास्त्रा**न्नाटके समुद्धरणम् उताहो नाटकाद**र्थशास्त्रे** इति चिन्तनीयम् । तत्र युद्धप्राणत्यागस्य धर्महेतुत्वं भर्तृपिण्डानिर्यातनस्य पापहेतुत्वं चार्थप्रधानेन यदुपदिश्यते, तत् प्रमाणानुग्रहविकलमुपप्रलोभनप्रायमविश्वास्यं भवतीति तत्रावश्यं प्रमाणमुपदर्शनीयम् । तच्चादौ "सा ते गतिरि"त्यादि श्रौतमुपदर्शितम् । पश्चात्तु अभियुक्तवचनरूपं स्मृतिकल्पं श्लोकद्वयमिति स्वरसतः प्रतीतेः "नवं शरावम्" इति श्लोको **नार्थशास्त्रकारस्य** स्वोक्तिर्भवितुमर्हति । परोक्त्यनुवादसहपाठादप्ययं श्लोकोऽ**र्थशास्त्रकारस्य** न स्वोक्तिः । "यान् यज्ञसङ्घैरि"ति पूर्वश्लोको हि 'यान्' 'तान्' इत्युभयत्राप्यनिर्दिष्टं विशेष्यं किमपि कामलक्षणं लोकलक्षणं वा पूर्वप्रकृतमाकाङ्क्षन्नसंशयं ग्रन्थान्तराभिजन इत्यनुवादरूपो निश्चितः । कि**ञ्चार्थशास्त्रे कौटिल्यः** स्वोक्तिरूपं श्लोकं श्लोकौ श्लोकान् वा न क्वचिदपि प्रतिज्ञापूर्वं लिखितवान् । इहैकत्र परम् "अपीह श्लोकौ भवत" इति तस्य पूर्वप्रतिज्ञाकरणमालक्ष्यमाणमुत्तरयोः श्लोकयोः परकीयतामेव द्योतयदर्थवद् भवति । काव्ये पुनः शास्त्रलोकसिद्धमर्थं वश्यवाचो महाकवय उत्सर्गतः स्वोक्त्यैव प्रतिपादयन्ति, यत्रक्वचित् परवचनानुपूर्वीमनुवदन्तो वा तेऽनुवादचिह्नमवश्यं कुर्वन्तीति **प्रतिज्ञायौगन्धरायणे** अनुवादलिङ्गाकरणाद् "नवं शरावम्" इति श्लोको **भास**महाकवेरेव स्वोक्तिरिति युक्तं पश्यामः । ते**नार्थशास्त्र**कारा**च्चाणक्या**दप्यस्मन्महाकवेः प्राचीनत्वं सिद्धं भवति । यस्तु **मेधातिथिः प्रतिमा**नाटकस्य पञ्चमाङ्के रामं प्रति रावणवाक्ये "भोः काश्यपगोत्रोऽस्मि, साङ्गोपाङ्गं वेदमधीये, मानवीयं धर्मशास्त्रं, माहेश्वरं योगशास्त्रं, बार्हस्पत्यमर्थशास्त्रं, मेधातिथेर्न्यायशास्त्रं, प्राचेतसं श्राद्धकल्पं च" इति स्मर्यते, स दिव्यानुभावपुरुषप्रायपाठात् तथाभूतः कश्चिन्महर्षिः स्याद्, न पुनर्मानवीयव्याख्याता पण्डितविशेष इति **भासं** प्रति नैतदर्वाचीनत्वभ्रान्तेरवकाशः ॥

उपलभ्यते चैतावत्प्राचीनत्वानुगुणा नाटकेष्वेतेषु गुणसमृद्धिः । अत्र

* पूर्णजलकलशोपहारलाभरूपा पूजा ।

हि प्रसन्नोदारगम्भीरा सरसहृदयङ्गमा भाषायाः शैल्येव तावदन्यादृशी काव्यगुणसमृद्धिः। प्रायः, यस्या वर्षसहस्रादर्वाचीनेषु काव्येष्वतिविरलं दर्शनमभाव एव वा।

सुशिक्षितमतिगोचरैः प्रशस्तैर्जनमनोविमर्शैर्नानारूपैः सन्ति सर्वतः समृद्धा इह वाक्यसमुदाहाराः।

अवस्थाभेदभिन्नाः सुसूक्ष्मास्तत्तद्वस्तुपरमार्था यथा सचेतसां पुर इव परिस्फुरेयुस्तथेह प्रतिपादिताः।

अपिच, यदौचित्यं नाम प्रतिपाद्यसङ्कोचविकासयोर्वा रसानुरूपशब्दार्थपरिग्रहे वा, तत् क्वचिदप्यत्र रसैकदृष्टिना महाकविना न लङ्घितम्।

कामं वयं सरसभणितीनामनायासप्रसरं प्रसिद्धास्तु एकद्वमहाकविकृतिषु न खलु नालक्षयामः। किन्तु तस्य परमा काष्ठैतस्मिन् नाटकचक्रे संलक्ष्यते। इदं हि आत्मीयकवेर्मुखान्निःश्वसितनिर्विशेषं विनिस्सृतमिति न खलु नोदेति सचेतसामेतत् परिशीलयतां बुद्धिः। सर्वथैतद्गतं शब्दार्थसौष्ठवमार्षसूक्तिसौष्ठवस्यैव, मन्ये, चारुतरं भूमिकान्तरमिति।

एषु रूपकेष्वेकैकस्मिन्ननुवाच्यमाने गुणानेतान् इतोऽधिकांश्च सहृदयाः स्वयमसंशयं प्रत्यक्षयिष्यन्ति। एषां पृथगुदाहृतिर्बहुवाक्यानुसन्धानसापेक्षा वाग्विस्तरोपपाद्या चोपोद्घातमतिमात्रं विस्तारयेदिति नेदानीं तत्र संरभामहे। सामान्यतस्तु शैलीप्रदर्शनार्थं कानिचिद् वाक्यानि तत्तन्नाटकेभ्य उदाहरामः।

**स्वप्नवासवदत्ते** वने **पद्मावती**परिजनकृतोत्सारणादुःखितां **वासवदत्तां** प्रति **यौगन्धरायण**स्याश्वासनोक्तिरियं—

"पूर्वं त्वयाप्यभिमतं गतमे*वमासी-
च्छ्लाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः।

---

* एवं गतं परिजनविभवोपेतं गमनमित्यर्थः।

कालक्रमेण जगतः परिवर्तमाना
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ॥" (अ. १. श्लो. ४)

सत्कारः सत्कारेण स्वीकर्तव्य इत्यमुमर्थं प्रति **वत्सराजस्य** समर्थनावाक्यं—

"गुणानां वा विशालानां सत्काराणां च नित्यशः ।
कर्तारः सुलभा लोके विज्ञातारस्तु दुर्लभाः ॥" (अ. ४. श्लो. ९)

**प्रतिज्ञानाटिकायां** प्रयत्नस्य फलावश्यम्भावोक्तिः—

"काष्ठादग्निर्जायते मथ्यमानाद्
भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फलन्ति ॥" (अ. १. श्लो. १८)

वरेषु गवेषणीयगुणपरा **महासेन**स्योक्तिः—

"कुलं तावच्छ्लाघ्यं प्रथममभिकाङ्क्षे हि मनसा
ततः सानुक्रोशं मृदुरपि गुणो ह्येष बलवान् ।
ततो रूपे कान्तिं न खलु गुणतः स्त्रीजनभयात्
ततो वीर्योदग्रं न हि न परिपाल्या युवतयः ॥" (अ. २. श्लो. ४)

कन्यामातॄणामवस्थोक्तिः—

"अदत्तेत्यागता लज्जा दत्तेति व्यथितं मनः ।
धर्मस्नेहान्तरे न्यस्ता दुःखिताः खलु मातरः ॥" (अ. २. श्लो. ७)

**पञ्चरात्रे द्रोणाचार्य**स्य शिष्यविषयचिन्तोक्तिः—

"अतीत्य बन्धूनवलङ्घ्य मित्रा-
ण्याचार्यमागच्छति शिष्यदोषः ।
बालं ह्यपत्यं गुरवे प्रदातु-
र्नैवापराधोऽस्ति पितुर्न मातुः ॥" (अ. १. श्लो. १८)

**युधिष्ठिरस्य** धार्तराष्ट्रदोषादात्मदोषाभिशङ्कनपरेयमुक्तिः—

"एकोदकत्वं खलु नाम लोके
मनस्विनां कम्पयते मनांसि ।
वैरप्रियैस्तैर्हि कृतेऽपराधे
यत्सत्यमस्माभिरिवापराद्धम् ॥" (अ. २ श्लो. ९)

योधकर्माभिनन्दनं प्रति **विराटस्योक्तिः**—

"ताडितस्य हि योधस्य श्लाघनीयेन कर्मणा ।
अकालान्तरिता पूजा नाशयत्येव वेदनाम् ॥" (अ. २. श्लो. २८)

**चारुदत्तनाटके** अन्धकारविषयोक्तिः—

"सुलभशरणमाश्रयो भयानां
वनगहनं तिमिरं च तुल्यमेव ।
उभयमपि हि रक्ष्यतेऽन्धकारे
जनयति यश्च भयानि यश्च भीतः ॥" (अ. १. श्लो. २०)

चौर्यप्रवृत्तस्योक्तिः—

"लुब्धोऽर्थवान् साधुजनाभिमानी
वणिक् स्ववृत्तावतिकर्कशश्च ।
यस्तस्य गेहं यदिनाम लप्स्ये
भवामि दुःखोपहतो न चित्ते ॥" (अ. ३. श्लो. ७)

**दूतघटोत्कचे धृतराष्ट्रस्याभिमन्युवध**दुःखितस्योक्तिः—

"बहूनां समुपेतानामेकस्मिन् निर्घृणात्मनाम् ।
बाले पुत्रे प्रहरतां कथं न पतिता भुजाः ॥" (श्लो. १७)

**दुर्योधनं** प्रति **घटोत्कचस्योक्तिः**—

"न तु जतुगृहे सुप्तान् भ्रातॄन् दहन्ति निशाचराः
शिरसि न तथा भ्रातुः पत्नीं स्पृशन्ति निशाचराः ।
न च सुतवधं सङ्ख्ये वृत्तं स्मरन्ति निशाचरा
विकृतवपुषोऽप्युग्राचारा घृणा न तु वर्जिता ॥" (श्लो. ४५)

**अविमारके** राजभावस्य मन्त्रित्वस्य च दुर्वहतां प्रति राज्ञो मन्त्रिणश्चोक्ती—

"धर्मः प्रागेव चिन्त्यः सचिवमतिगतिः प्रेक्षितव्या स्वबुद्ध्या
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ कालयोगेन कार्यौ ।
ज्ञेयं लोकानुवृत्तं परचरनयनैर्मण्डलं प्रेक्षितव्यं
रक्ष्यो यत्नादिहात्मा रणशिरसि पुनः सोऽपि नावेक्षितव्यः ॥"
(अ. १. श्लो. १२)

"प्रसिद्धौ कार्याणां प्रवदति जनः पार्थिवबलं
विपत्तौ विस्पष्टं सचिवमतिदोषं जनयति ।
अमात्या इत्युक्ताः श्रुतिसुखमुदारं नृपतिभिः
सुसूक्ष्मं दण्ड्यन्ते मतिबलविदग्धाः कुपुरुषाः ॥"(अ. १. श्लो. ५)

अयं निशारम्भवर्णने श्लोकः—

"व्यामृष्टसूर्यतिलको विततोडुमालो
नष्टातपो मृदुमनोहरशीतवातः ।
संलीनकामुकजनः प्रविकीर्णचोरो
वेषान्तरं रचयतीव मनुष्यलोकः ॥" (अ. २. श्लो. १३)

दैवस्य बलवत्तां प्रति श्लोकः—

"यत्ने कृते यदि न सिध्यति कोऽत्र दोषः
को वा न सिध्यति ममेति करोति कार्यम् ।
यत्नैः शुभैः पुरुषता भवतीह नृणां
दैवं विधानमनुगच्छति कार्यसिद्धिः ॥" (अ. ३. श्लो. १२)

**बालचरिते** तमसः प्रभुत्वं प्रति यथा —

"अप्रकाशा इव दिशो घनीभूता इव द्रुमाः ।
सुनिविष्टस्य लोकस्य कृतो रूपविपर्ययः ॥" (अ. १. श्लो. १६)

यथा च —

"दुद्दिणविणट्ठजोह्ना ळत्ती वट्टइ णिमीळिआकाळा ।
संपाउदप्पसुत्ता णीळणिवषणा जहा गोवी ॥" (अ. १. श्लो. १९)*

**मध्यमव्यायोगे** मङ्गलश्लोको यथा—

"पायात् स वोऽसुरवधूहृदयावसादः
पादो हरेः कुवलयामलखङ्गनीलः ।
यः प्रोद्यतस्त्रिभुवनैकमणे रराज
वैदूर्यसङ्क्रम इवाम्बरसागरस्य ॥" (श्लो. १)

राक्षसवर्णनं यथा—

"सिंहास्यः सिंहदंष्ट्रो मधुनिभनयनः स्निग्धगम्भीरकण्ठो
बभ्रुभ्रूः श्येननासो द्विरदपतिहनुर्दीर्घविश्लिष्टकेशः ।
व्यूढोरा वज्रमध्यो गजवृषभगतिर्लम्बपीनांसबाहुः
सुव्यक्तं राक्षसीजो विपुलबलयुतो लोकवीरस्य पुत्रः ॥" (श्लो. २६)

**कर्णभारे** कवचकुण्डलदानं वारयितारं शल्यं प्रति कर्णोक्तिः—

"शिक्षा क्षयं गच्छति कालपर्ययात्
सुबद्धमूला निपतन्ति पादपाः ।

---

* दुर्दिनविनष्टज्योत्स्ना रात्रिर्वर्तते निमीलिताकारा ।
सम्प्रावृतप्रसुप्ता नीलनिवसना यथा गोपी ॥

जलं जलस्थानगतं च शुष्यति
हुतं च दत्तं च तथैव तिष्ठति ॥" (श्लो. १९)

**ऊरुभङ्गे** भग्नोरुपतितस्य **दुर्योधनस्य** वर्णनं यथा—

"श्रीमान् संयुगचन्दनेन रुधिरेणार्द्रानुलिप्तच्छवि-
र्भूसंसर्पणरेणुपाटलभुजो बालव्रतं आहितः ।
निर्वृत्तेऽमृतमन्थने क्षितिधरान्मुक्तः सुरैः सासुरै-
राकर्षन्निव भोगमर्णवजले श्रान्तोज्झितो वासुकिः ॥" (श्लो. २८)

**अभिषेकनाटके सीता**ग्निप्रवेशचोदनादुःखितस्य **लक्ष्मण**स्योक्तिः—

"विज्ञाय देव्याः शौचं च श्रुत्वाचार्यस्य शासनम् ।
धर्मस्नेहान्तरे न्यस्ता बुद्धिर्दोलायते मम ॥" (अ. ६. श्लो. २१)

**रावणस्य राम**भयनिवारणोक्तिः—

"कथं लम्बसटः सिंहो मृगेण विनिपात्यते ।
गजो वा सुमहान् मत्तः सृगालेन निहन्यते ॥" (अ. ३. श्लो. १९)

**प्रतिमानाटके रामस्य** वचनम्—

"आरब्धे पटहे स्थिते गुरुजने भद्रासने लङ्घिते
स्कन्धाच्चारणनम्यमानवदनप्रच्योतितोये घटे ।
राज्ञाहूय विसर्जिते मयि जनो धैर्येण मे विस्मितः
स्वः पुत्रः कुरुते पितुर्यदि वचः कस्तत्र भो विस्मयः ॥"
(अ. १. श्लो. ४)

**रामस्य** स्वाभिषेकाज्ञाश्रवणोत्तरमात्मपितृपादपतनवृत्तान्तोक्तिः **सीतां** प्रति—

"समं बाष्पेण पतता तस्योपरि ममाप्यधः ।
पितुर्मे क्लेदितौ पादौ ममापि क्लेदितं शिरः ॥" (अ. १. श्लो. ५)

**कैकेयीकुपितस्य लक्ष्मणस्य रामं** प्रत्युक्तिः—

"यदि न सहसे राज्ञो मोहं धनुः स्पृश मा दया
स्वजननिभृतः सर्वोऽप्येवं मृदुः परिभूयते ।
अथ न रुचितं मुञ्च त्वं मामहं कृतनिश्चयो
युवतिरहितं लोकं कर्तुं यतश्छलिता वयम् ॥" (अ. १. श्लो. १८)

**भरतस्य** स्वजनदर्शनौत्सुक्यादुक्तिः—

"पतितामिव शिरः पितुः पादयोः स्निह्यतेवास्मि राज्ञा समुत्थापित-
स्त्वरितमुपगता इव भ्रातरः क्लेदयन्तीव मामश्रुभिर्मातरः ।
सदृश इति महानिति व्यायतश्चेति भृत्यैरिवाहं स्तुतः सेवया
परिहसितमिवात्मनस्तत्र पश्यामि वेषं च भाषां च सौमित्रिणा ॥"
(अ. ३. श्लो. ३)

**भरतस्य कैकेयीं** प्रत्युक्तिः—

"वयमयशसा चीरेणार्यो नृपो गृहमृत्युना
प्रततरुदितैः कृत्स्नायोध्या मृगैः सह लक्ष्मणः ।
दयिततनयाः शोकेनाम्बाः स्नुषाध्वपरिश्रमै-
र्धिगिति वचसा चोग्रेणात्मा त्वया ननु योजिताः ॥"
(अ. ३. श्लो. १६)

तस्यैवोक्त्यन्तरं—

"तत्र यास्यामि यत्रासौ वर्तते लक्ष्मणप्रियः ।
नायोध्या तं विनायोध्या सायोध्या यत्र राघवः ॥" (अ. ३. श्लो. २२)

अविदितनामके नाटके मङ्गलश्लोकः—

"पादः पायादुपेन्द्रस्य सर्वलोकोत्सवः स वः ।
व्याविद्धो नमुचिर्येन तनुताम्रनखेन खे ॥"

एषा श्लोकानां शैली । अच्छन्दोबद्धानां तु वाक्यानां सर्वेषामपि कामनीयकं श्लोकतोऽप्युत्कृष्टमेषु रूपकेषु सर्वत्र सजातीयसर्वग्रन्थान्तरातिशायि निरुपमं च । तदेतद् ग्रन्थानुवाचनयैव सुखसंवेद्यं भावकानामिति नेह तद्वाक्योदाहरणप्रपञ्चनं कुर्मः ।

न खलु सा काचिद् रीतिः **कालिदासा**दिनाटकेष्वभिलक्ष्यते, यां **भास**महाकविः स्वेषु नाटकेषु न प्रस्थापयाम्बभूव । विक्रमाब्दारम्भोत्तरमनन्यगामिनीं भासानुकरणम् । कविचक्रवर्तिख्यातिं लब्धवतः **कालिदासस्य** कृतिष्वभ्यर्हिते **अभिज्ञानशाकुन्तले भास**काव्यच्छायानामनुकरणं भूयिष्ठमुपलभ्यते । यथा—

"यस्यां न प्रियमण्डनापि महिषी देवस्य मन्दोदरी
स्नेहाल्लुम्पति पल्लवान् न च पुनर्वीजन्ति यस्यां भयात् ।
वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमा
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम् ॥"

इत्ययम**भिषेक**नाटकचतुर्थाङ्कगतः श्लोकः । अस्यच्छाया **शाकुन्तल**चतुर्थाङ्कस्थे

"पातुं न प्रथमं व्यवस्यति पयो युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥"

इत्यस्मिन् पद्ये लक्ष्यते । न केवलमिह तच्छायामात्रस्य दर्शनं, किन्तु "प्रियमण्डनापि, स्नेहात्, पल्लवान्, सेयम्" इत्येषां सरसहृद्यानां तदीयपदानामप्युपादानमस्ति । **बालचरित**स्य प्रथमाङ्के शिशुमर्धरात्रे **वसुदेवस्य** हस्ते कथञ्चिदर्पयित्वा हृदयेन शिशुदिशं देहेन सूतिकागृहं च द्विदिक्कं गच्छन्तीं **देवकीम**धिकृत्य **वसुदेवस्य** वचनं—

"हृदयेनेह तत्राङ्गैर्द्विधाभूतेव गच्छति ।
यथा नभसि तोये च चन्द्रलेखा द्विधाकृता ॥"

इति । अस्यच्छाया **शाकुन्तल**प्रथमाङ्कस्थे

"गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥"

इति पद्ये स्पष्टा । **स्वप्नवासवदत्त**प्रथमाङ्कगतस्य 'विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्ययाः' इति पादस्य कयाचिद् भङ्ग्यार्थानुकारः 'विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः' इति **शाकुन्तल**प्रथमाङ्के कृतः । एवमन्यदपि **भास**नाटकच्छायानुविधानं **कालिदास**कृतिषु द्रष्टव्यम् । **भवभूते**रप्येतन्नाटकचक्रपरिशीलनजनिताः संस्कारास्तत्कृतिषु बहुलं प्रस्फुरन्ति । **उत्तररामचरित**स्य द्वितीयाङ्कगतो **ह्यात्रेयी**संवादः **स्वप्नवासवदत्त**प्रथमाङ्कगतं ब्रह्मचारिसंवादमनुकरोति; षष्ठाङ्कगतश्च विद्याधरसंवादोऽ**भिषेक**नाटकषष्ठाङ्कगतं विद्याधरसंवादम् । **मालतीमाधव**पञ्चमाङ्कस्थो दण्डकप्रयोगोऽ**विमारक**पञ्चमाङ्कस्थं दण्डकप्रयोगमनुकरोति ।

अपिच, यत् **कालिदासात्** प्राचीनं मन्यन्ते, तस्मिन् **मृच्छकटिके** न **भास**काव्यच्छायामात्रस्यानुकरणम् ; अपितु **भास**काव्यवाक्यानामेव भूयिष्ठानां साक्षान्निवेशनमस्ति । **चारुदत्त**नाटके हि यानि पद्यानि चूर्णकवाक्यानि च, तानि तथैव वा मनागावापोद्वापाभ्यां व्यत्ययकरणेन वा **मृच्छकटिके** परिपठितानि । तत्र **चारुदत्त**नाटकस्य प्रथमाङ्के श्लोकः —

मृच्छकटिकविचारः ।

"यासां बलिर्भवति मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विभक्तपुष्पाः ।
तास्वेव पूर्वबलिरूढयवाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥"

इति । **मृच्छकटिक**स्य तु —

"यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः ।

तास्वेव सम्प्रति विरूढतृणाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥"

इति। **चारुदत्तस्य** तृतीयाङ्के —

"मार्जारः प्लवने वृकोऽपसरणे श्येनो गृहालोकने
निद्रा सुप्तमनुष्यवीर्यतुलने संसर्पणे पन्नगः ।
माया वर्णशरीरभेदकरणे वा(ग्) देशभाषान्तरे
दीपो रात्रिषु सङ्कटे च तिमिरं वायुः स्थले नौर्जले ॥"

इति । **मृच्छकटिकस्य** तु

"मार्जारः क्रमणे मृगः प्रसरणे श्येनो गृहालुञ्चने
सुप्तासुप्तमनुष्यवीर्यतुलने श्वा सर्पणे पन्नगः ।
माया रूपशरीरवेषरचने वाग् देशभाषान्तरे
दीपो रात्रिषु सङ्कटेषु डुडुमो वाजी स्थले नौर्जले ॥"

इति । **चारुदत्तस्य** चतुर्थाङ्के—

"विषादस्रस्तसर्वाङ्गी सम्भ्रमोत्फुल्ललोचना ।
मृगीव शरविद्धाङ्गी कम्पसे चानुकम्पसे ॥"

इति । **मृच्छकटिकस्य** तु —

"विषादस्रस्तसर्वाङ्गी संभ्रमभ्रान्तलोचना ।
नीयमाना भुजिष्यात्वं कम्पसे नानुकम्पसे ॥ "

इति । **चारुदत्तनाटके** "किण्णुखु अज्ज पच्चूस एव्व गेहादो णिक्खन्तस्स बुभुक्खाए पुक्खरपत्तपडिदजळविन्दू विअ चळचळाअन्ति विअ मे अक्खीणि । (परिक्रम्य) जाव गेहं गच्छिअ जाणामि किण्णुखु संविधा विहिदा ण वेत्ति । एदं अह्माणं गेहं । जाव पविसामि" इति सूत्रधारवाक्यानि । एतदर्थकानि **मृच्छकटिके** त्वेतानि "................ चिरसङ्गीदोवासणेण सुक्खपोक्खरणाळाइं विअ मे बुभु-

क्खाए मिळाणाइं अङ्गाइं । ता जाव गेहं गदुअ आणामि अत्थि किं पि कुटु-म्बिणीए उववादिअं ण वेत्ति । (परिक्रम्यावलोक्य च) एदं तं अह्माणं गेहं, ता प-विसामि ।"

**चारुदत्तनाटकस्य** द्वितीयाङ्कादौ वाक्यानि—

" **गणिका**— तदो तदो ।

**चेटी**— अह्महे ण किञ्चि मए भणिदं । किं तदो तदो त्ति ।

**गणिका**—हञ्जे! किं मए मन्तिदं"

एतदर्थकानि **मृच्छकटिकस्य** तत्र वाक्यानि—

**वसन्तसेना**—हञ्जे! तदो तदो ।

**चेटी**—अज्जुए! ण किं पि मन्तेसि । किं तदो तदो ।

**वसन्तसेना**—किं मए भणिदं ।

**चेटी**—तदो तदो त्ति ।"

**चारुदत्तनाटकस्य** तृतीयाङ्के वाक्यानि—

"**चारुदत्तः**—वयस्य! वीणा नामासमुद्रोत्थितं रत्नम् । कुतः"

"**विदूषकः**—कामं पसंसेदु भवं । मम खु दाव गाअन्तो मणुस्सो इत्थि-आ वि पठन्ती उभअं आदरं ण देदि । गाअन्तो दाव मणुस्सो रत्तसुमणावेट्टिदो विअ पुरोहिदो दिढं ण सोभइ । इत्थिआ वि पठन्ती छिण्णणासा विअ धेणुआ अदिविरूवा होइ ।"

**मृच्छकटिके** त्वेतानि—

"**चारुदत्तः**—अहो अहो साधु साधु रेभिलेन गीतम् । वीणा हि नामा-समुद्रोत्थितं रत्नम् । कुतः"

"**विदूषकः**—मम दाव दुवेहिं जेव्व हस्सं जाआदि इत्थिआए सक्कअं पठन्तीए मणुस्सेण अ काआळिं गाअन्तेण। इत्थिआ दाव सक्कअं पठन्ती दिण्णणवणस्सा विअ गिट्ठी अहिअं सुसुआअदि। मणुस्सो वि काअळिं गाअन्तो सुक्खसुमणोदामवेट्ठिदो वुड्ढपुरोहिदो विअ मन्तं जवन्तो दिढं मे ण रोआदि।"

**चारुदत्त**नाटकस्य चतुर्थाङ्के वाक्यं —

"**सज्जलकः**—मदनिके! किं न पर्याप्तं, द्वितीयमप्यनार्यं करिष्यामि। न खल्वत्र शस्त्रेण कश्चित् परिक्षतो व्यापादितो वा।"

एतदर्थकं **मृच्छकटिक**स्य वाक्यं —

"**शर्विलकः**—मदनिके! भीते सुप्ते न शर्विलकः प्रहरति। तन्मया न कश्चिद् व्यापादितो नापि परिक्षतः।"

**चारुदत्त**चतुर्थाङ्के वाक्यान्तरं —

"**सज्जलकः**—आर्यचारुदत्तेनास्मि प्रेषितः, यस्तावदलङ्कारो मम हस्ते निक्षिप्तः, स त्वयं भोगमलिनतया गृहस्यासान्निध्यात् कौटुम्बिकानां दुरारक्षः। तद् गृह्यतामिति।"

एतदर्थकं **मृच्छकटिके** वाक्यं —

"**शर्विलकः**—"सार्थवाहस्त्वां विज्ञापयति—जर्जरत्वाद् गृहस्य दूरक्षमिदं भाण्डम्। तद् गृह्यतामिति।"

एवमन्यान्यपि भूयिष्ठानि वाक्यानि श्लोकाश्च **मृच्छकटिके चारुदत्ती**यसंवादीनि दृश्यन्ते। इतिवृत्तं च द्वयोश्**चारुदत्त**चरितमेव। तेनैवं मन्तव्यं—तयोरन्यतरदन्यतरस्याधार इति। तत्रापि **चारुदत्त**नाटकमेव **मृच्छकटिक**स्य मूलमिति न्याय्यं, **मृच्छकटिके**ऽर्वाचीनकाव्यादृतस्य प्रस्तावनायां कविकाव्यनामनिर्देशस्य दर्शनेन तस्य तन्निर्देशरहित**चारुदत्ता**पेक्षयार्वाचीनत्वौचित्यात्।

किञ्च, **चारुदत्त**नाटकादृष्टा अपि मनोहराः केऽपि ग्रन्थसन्दर्भा **मृच्छकटिके** सन्ति । तेन लघुग्रन्थरूपतया स्थितं **चारुदत्तनाटकम्** आस्वाद्यतातिशयाय कैश्चित् संस्कारैरुपेतं कृत्वा विस्तार्य च **मृच्छकटिक**संज्ञया **शूद्रके**न ख्यापितमिति युक्तमूहितुम् । एवञ्च **मृच्छकटिकस्य चारुदत्त**नाटकप्रायत्वात् तत्र सचेतसां **चारुदत्त**वदतिपुरातनत्वावभास उपपद्यते, तत्सङ्कलनमात्रकर्तरि च **शूद्रके** तन्मूलकवित्वभ्रमादतिप्राचीनत्वभ्रमः । काममयं **कालिदासतः** प्राचीन इत्यत्र प्रमाणाभावः, आलङ्कारिक**वामनात्** तु प्राचीन एवासौ । तदीयायां **काव्यालङ्कारसूत्रवृत्तौ** "शूद्रकादिरचितेषु प्रबन्धेष्वस्य (श्लेषाख्यगुणस्य) भूयान् प्रपञ्चो दृश्यते" इति कथनात् । तदेवं **भासस्य** कवित्ववैभवं **कालिदासशूद्रका**द्युपजीव्यमासीदिति फलितम् ॥

प्रयोगविशेषाः । अत्र नाटकचक्रे ततइतः सन्ति केचित् परिमिताः पाणिनीयाहृद्या आलङ्कारिकाहृद्याश्च प्रयोगाः—

१. "अपरिचयात्तु न **श्लिष्यते** मे मनसि ।" (स्वप्न. अङ्क. १)

२. "**आपृच्छामि** भवन्तौ ।" (स्वप्न. अङ्क. १)

३. "साधुजनहस्तंगतैषा **नोत्कण्ठिष्यति** ।" (स्वप्न. अङ्क. १)

४. "हस्त्यश्वरथपदातीनि विजयाङ्गानि ।" (प्रतिज्ञा. अङ्क. ४)

५. "दैवप्रामाण्याद् **भ्रश्यते** वर्धते वा ।" (प्रतिज्ञा. अङ्क. १)

६. "यावदहमुच्छ्वसामि ।" (प्रतिज्ञा. अङ्क. १)

७. "कथमगणितपूर्वं **द्रक्ष्यते**........**श्रोष्यते** ।" (प्रतिज्ञा. अङ्क. १)

८. "प्रथम**मभिकाङ्क्षे** हि मनसा ।" (प्रतिज्ञा. अङ्क. २)

९. "जित इति पुनरेनं **रुष्यते** वासुभद्रः ।" (पञ्च. अङ्क. २)

१०. "स्त्रीगतां **पृच्छसे** कथाम् ।" (पञ्च. अङ्क. २)

११. "वीजन्तो मलयानिला अपि ।" (अभिषेक. अङ्क. ३)

१२. "सीतां समाश्वासितुम् ।" (अभिषेक. अङ्क. ७)

१३. "ऋज्वायतां च मुखतोरणलोलमालाम् ।" (स्वप्न. अङ्क. ५)

इत्येवञ्जातीयकाः। अत्र स्थूलाक्षरेषु पदेषु पदव्यत्ययः,'हस्त्यश्वरथपदातीनी'त्यत्रानेकवद्भावः उच्छ्वसामीत्यत्र शबलोपः, 'वीजन्तः' 'समाश्वासितुमि'त्यनयोर्णिज्लोपः, 'ऋज्वायतां चे'त्यत्र पादपूरणार्थश्चशब्दश्च कृतः । किन्त्वत्र समाधानमपि पाणिनीयानां सुगमम् । द्वितीये प्रयोगे आ इत्यस्यानुपसर्गतायाः, तृतीये आत्मनेपदानित्यतायाः, चतुर्थे हस्त्यश्वरथसहिताः पदातयो येषु तानीति बहुव्रीहेः, षष्ठे गणकार्यानित्यतायाः, एकादशे पचाद्यजन्ताद् वीजशब्दादाचारक्विपः, द्वादशे समाश्वासवच्छब्दाण्णिचो बाहुलकलोपस्य, त्रयोदशे चशब्दस्य तुशब्दार्थकतायाः, अन्येषु यथाकथञ्चित् कर्मवद्भावस्य चाश्रयणेनोपपत्तेः । वस्तुतस्तु **नन्द**कालिक**चाणक्य**प्राचीनस्यास्मन्महाकवे**र्नन्द**सहजीवि**वर्षोपाध्याय**शिष्य**पाणिनि**शासनानुसरणमसम्भावितमिति एवंविधः प्रयोगस्तत्रभवतो वश्यवाङ्मयस्य महाकवेर्न दूषणम्, अपितु पुराणतरताया भूषणमिति विभावनीयम् । अव्युत्पन्नलेखकहस्तपरम्पराप्रमादापतिता वा प्रचाररहितेऽस्मिन् नाटकचक्रेऽपपाठा एषु प्रयोगेषु कतिपये स्युः ।

एवं **प्रतिज्ञानाटिकायां भामहो**द्भावितः पूर्वोक्तो न्यायविरोधोऽपि सुपरिहरः । चारशून्यतया सचिवोपेक्षया वा **वत्सराजस्य** महामतेः सतो गजच्छद्मप्रयोगविषयशत्रूद्यमाज्ञानं, क्रुद्धैर्बहुभिः शत्रुभिरसहायस्य करगतस्य तस्य हननाभावः, प्रत्यक्षदृष्टेऽपि कृत्रिमगजे दिवा विशेषाग्रहणम् इत्येतानर्थान् **भामहो** न्यायविरुद्धान् मन्यते । तत्र हि आद्ययोर्न काचिदनुपपत्तिः, चारवतो भक्तिमन्निपुणसचिवचिन्त्यमानकार्यस्य वृद्धदर्शनस्य च सतोऽपि गजमृगयाव्यसनितयामात्यानुमतिमप्रतीक्ष्य रभसधाविनो राज्ञः शत्रूद्यमाज्ञानस्य सम्भवाद्, वीरः सावज्ञो मानवान् वैरी जीवग्राहं गृहीत्वा स्वस्वामिपादमूले यन्नीयते, तदेव तद्वधापेक्षया स्वामिपरितोषकरमिति, करगतस्य बहुप्रहारानिश्चेष्टस्य हननमतिक्षुद्रकर्मेति च विचारणया निपुणोदारभृत्यसाधारणया परामात्येन **सालङ्कायनेन** कृतस्य स्वयोधोप-

क्रान्तवत्सराजवधप्रतिषेधस्य न्याय्यत्वाच्च । अत एवारुचेर्मन्ये, भामहाचार्यस्तृतीयं न्यायविरोधं कृत्रिमगजगतविशेषाज्ञानलक्षणं पर्यन्ते समुद्भावयाम्बभूव । किन्तु सूक्ष्मेक्षिकायामेतदपि दूषणं न लगति । प्रतिज्ञानाटिकायां हि वत्सराजच्छलनवृत्तान्तं निवेदयन् हंसको नाम वक्ति—

"तदो दिउणं विअ अद्धाणं गच्छिअ साळवुक्खच्छाआए सवण्णणट्ठणीळदाए परुब्भासिदेहि असरीरविणिक्खित्तेहि विअ दन्तजुअळेहि सूइदो धणुसदमत्तेण विअ दिट्ठो सो दिव्ववारणपडिच्छन्दो"

इति । यत्र स कृत्रिमो नीलहस्ती स्थापितस्तत्र वनोद्देशे सालवृक्षच्छायायास्तथा बाहुल्यमासीद्, यथा तद्देहनैल्यस्याविवेकोऽभवदित्यनेन वाक्येन प्रतीयते । तत् कथं दन्तयुगलानुमेयप्राये तस्मिन् कपटहस्तिनि दिवापि कृत्रिमत्वज्ञापकविशेषग्रहणस्य सम्भवः । कामम् 'अनर्धागते सूर्ये' मध्याह्नासन्नकाले वा वत्सराजस्यायं नीलहस्तिग्रहणसम्भ्रम इति प्रतिज्ञानाटिकातोऽवगमात् सान्द्रयापि वनच्छायया वासरमध्यालोकप्रभावस्यानभिभवनीयत्वाद् दिवा सालवृक्षच्छायया न गजगतविशेषतिरोधानं भवति, तया गजस्वरूपगतनैल्यावच्छादनोक्तिश्चेयमतिशयोक्तिमात्रमिति मत्वा भामहेन दूषणं दत्तम्, अस्माभिस्तु सालच्छायाबाहुल्येन दिनप्रभावाभिभवं सम्भावयद्भिरेनामनुभवसिद्धवस्तुवृत्तकथनरूपां मत्वा तद् दूषणं समाहितम् । यथा तूक्तं बृहत्कथाप्रतिबिम्बे कथासरित्सागरे* सान्ध्यतिमिरप्रसरोऽपि तदानीं स्थित इति, तथा कृत्रिमगजगतविशेषाज्ञानं वत्सराजस्य सुतरामेवोपपन्नम् । किन्त्वियं सान्ध्यतिमिरप्रसरवाचोयुक्तिः प्रतिज्ञानाटिकायां नास्ति । बृहत्कथायां तु एषा सोमदेवभट्टेन दृष्टा स्याद्, यां तन्मूले कथासरित्सागरे स निवेशितवान् । बृहत्कथायां चैषा¶ तत्कर्त्रास्य भामहदूषणस्य परिहारदार्ढ्याय कल्पिता स्याद् इति सर्वमनवद्यम् ॥

---

* द्वितीयलम्बकस्य चतुर्थतरङ्गेऽष्टादशश्लोकः—

"गान्धर्वदत्तचित्तत्वात् सन्ध्याध्वान्तवशाच्च सः ।
न तं वनगतं राजा मायागजमलक्षयत् ॥" इति ।

¶ एतां चेद् भामहो व्यज्ञास्यत्, कृत्रिमगजगतविशेषाज्ञानस्य न्यायविरुद्धत्वं नावक्ष्यद् इत्यतोऽपि हेतोर्बृहत्कथा भामहादर्वाचीना वेदितव्या ।

अस्य **भास**नाटकचक्रस्य **कालिदास**काले निरङ्कुशः प्रचार आसीत्, 'प्रथितयशसां **भाससौमिल्लकविपुत्रा**दीनाम्' इति **कालिदासो**क्तेः। **शूद्रक**काले तु स भृशं विरलोऽभवत्। अत एव **मृच्छकटिके शूद्रकस्य चारुदत्त**नाटकीयभूयिष्ठवाक्यसङ्कलनसंरम्भोपपत्तिः, तथा परवाक्यसङ्कलननिष्पादितस्य **मृच्छकटिक**स्य प्रचारोपपत्तिश्च। ततः प्रचारः क्रमशो हीयमानो गत एव तावदभावमद्यत्वे। तत्र किं कारणं स्यात्। न तावद् गुणविरहः कारणं, **कालिदासा**दिस्पृहणीयगुणगणपौष्कल्यस्य प्रागुपपादनात्। नापि स्वरसभङ्गसमर्थनीयपूर्वोक्तकतिपयप्रयोगसंयुक्तत्वं कारणं, **वार्त्तिक-महाभाष्या**दिसाचिव्यदूराधिरूढमहिमनि सर्वतो व्याप्तिं गते पाणिनीये **शब्दानुशासने**, कासुचित् ततइतः प्रसृत्वरीषु **मेधावि-भामहा**द्यालङ्कारिकप्रणीतासु शिक्षासु, तदुभयानुसरणनियमप्रणये च संस्कृताध्यायिना सर्वतः संजाते प्रादुर्भूतानां **कालिदास**कृतीनां तथाविधकतिपयप्रयोगसंयुक्तत्वेऽपि प्रचाराव्याघातात्। नापि ग्रन्थेषु कविनामानिवेशः कारणं, ग्रन्थानिविष्टकविनाम्नामपि **रघुवंश-शिशुपालवधा**दीनां प्रचारदर्शनात्। अतोऽप्रचारे कारणमदृष्टमेव किञ्चित् कल्प्यं, यद्बलाद् आचार्य**व्याडि**प्रणीतः **सङ्ग्रहो गुणाढ्य**रचिता **बृहत्कथे**त्येवमादयो ग्रन्था नामशेषतां प्राप्ताः।

भप्रचारः।

एवं चिरप्रनष्टानामतिपुराणानामेषां **भास**नाटकानां बहूनामयमिदानीं युगपदुपलम्भो मृतपुनरुत्थानवत् कस्य नाम जगति न भवेदाश्चर्याय चानन्दाय च। एष हि संस्कृतप्रणयिनां पुरावृत्तविमर्शकानां च महार्घो निधिलाभः। अनेन च प्रनष्टलाभप्रत्ययेन कापि जनिता मे प्रत्याशा—नाटकान्तराण्यपि तस्य जातुचिदुपलप्सीयेति, नखलु **भास**नाटकानि परिगणितानि केनचिद् एतावन्तीति। अपूर्व**भास**नाटकबृन्दाभिलेखधन्यं जीर्णतालपत्रसम्पुटं ये चिरादरक्षन्, मह्यं चोपाकुर्वन्, तेषु '**मणालिक्कर**मठस्वामिषु विशिष्य तज्ज्येष्ठे **शङ्करनारायणशर्म**महाशये कृतज्ञतामनपायिनीं वहामि। स्मरामि च हार्देन कतिपयतदुपमातृकादायकस्य पिषारोटिगोविन्दज्यौतिषिकस्य (पुत्तियल्) **वासुदेवशर्म**महाशयस्य (तालमण्) **कृष्णतन्त्रि**महाशयस्य च।

तदेवमभिनवोपलब्धानां नाटकानां स्वभावः, कर्ता, काल इत्येतत्प्रधाना विचाराः कृताः। पुरावृत्तविशेषाभ्यूहानुकूलं वस्तु तेषु किंकिमस्तीति चिन्तनं सकलनाटकव्यालोडनसापेक्षत्वात् सकलनाटकप्रकाशनोत्तरमेव सुकरं सुबोधं चेति कृत्वा स्थापितमायत्यै। उपलब्धे नाटकचक्रसंपुटे **स्वप्नवासवदत्त**नाटकस्य प्राथम्यान्नाटकान्तरकर्त्रादिनिर्णयानुकूलत्वाच्च तदिदानीमादितः प्रकाशयामः। क्रमेण तु **प्रतिज्ञायौगन्धरायणा**दीनि प्रकाशयिष्यामः॥

निगमनम्।

अनन्तशयनम्
११–४–१९१२.

त. गणपतिशास्त्री.

## ERRATA TO INTRODUCTION.

| Page. | Line. | Incorrect. | Correct. |
|---|---|---|---|
| xix | 14 | ज्ञा | मा |
| xxii | 17 | 9 | 10 |
| ,, | 23 | second | third |
| ,, | 24 | fifth | fourth |
| ,, | 28 | very same | 2nd |
| ,, | ,, | is | of 5th Adhikarana is |
| २० | १६ | नव | दश |
| ,, | २१ | पञ्चमा | चतुर्था |
| ,, | ,, | द्वि | तृ |

# निवेदना ।

अत्रास्य **स्वप्नवासवदत्तम्** इति संज्ञा **राजशेखर**सुभाषितानुसाराद् व्यवहृता । **स्वप्नवासवदत्ते**ति **स्वप्ननाटक**मिति च कामं व्यवहर्तुं शक्यम् । तत्र **मणलिक्कर**मठीया **स्वप्नवासवदत्त**मातृका **क.** चिह्निता । **पण्डितानन्ताचार्य**प्रहिता **ख.** चिह्निता । **कृष्णतन्त्रि**स्वामिका **ग.** संज्ञा । आद्ययोः पाठभेदाः प्रतिपृष्ठमधस्तान्निवेशिताः । तृतीयस्यास्तु ते पुस्तकान्ते पृथङ् निवेशिताः । मातृकायामदृष्टानामपेक्षिततया प्रतिभातानामक्षराणां चापरेखान्तर्निवेशनम्, असमञ्जसानामक्षराणां पार्श्वतः प्रश्नचिह्नदानपूर्वं समञ्जसाभिमतान्यक्षराणि निवेश्य तेषामुभयेषां चापरेखान्तर्निवेशनं, समञ्जसाक्षराप्रतिभानेऽसमञ्जसाक्षरमात्रस्य सप्रश्नचिह्नस्य चापरेखान्तर्न्यसनमित्येषा संशोधनरीतिः । कस्याञ्चिदपि मातृकायां प्राकृतस्य संस्कृतच्छायाया अदर्शनात् सा प्रायः पर्यालोच्य लिखिता । तत्तत्पृष्ठेषु यथापेक्षं टिप्पण्यप्यधस्ताद् दत्ता । ये **ग.** ग्रन्थे पाठभेदाः, ये च **क.** ग्रन्थे त्रुटितांशाः **ख.** ग्रन्थादुपलब्धाः, ते पुस्तकस्यान्ते परिशिष्टतया योजिताः ॥

**त. गणपतिशास्त्री.**

# कथावस्तुसंक्षेपः

"**पद्मावतीं** नाम **दर्शक**स्य राज्ञो भगिनीं वत्सराज **उदयनः** परिणेष्यति, ततः शत्रुहृतं राज्यं समग्रं पुनरधिगमिष्यति" इति सिद्धादेशिकवाक्यविश्वासात् **पद्मावती**परिणयशीघ्रघटनाय वत्सराजमन्त्री **यौगन्धरायणो वासवदत्तां** नाम तत्पूर्वमहिषीमवन्तिराज**महासेन**दुहितरं **लावाणक**ग्रामदाहेन दग्धामपदिश्य ब्राह्मणव्यञ्जनः प्रोषितभर्तृकस्वभगिनीव्यपदेशेन **पद्मावत्या** हस्ते न्यासं कृत्वा गतः । तां चात्यन्तिक**वासवदत्ता**विरहप्रतीत्या **वत्सराजः** सशोकोऽपि **दर्शकेन** दत्तां महिषीत्वेन प्रतिजग्राह । एकदा पर्यङ्कनिद्रालोर्**वत्सराजस्य** पार्श्वे **पद्मावतीबुद्ध्या** सविष्टा **वासवदत्ता** स्वात्मानमभिसम्बुध्योत्स्वप्नायमानमुत्कण्ठया **वत्सराजं** स्वप्रवचनानुगुणं किमप्यभिभाष्य संस्पृश्य च तत्प्रबोधभिया शय्यागृहाद् बहिरधावद्, झटिति च प्रबुध्यानुधावतो **वत्सराजाद्** द्वारपक्षाभिघातक्षणप्रतिरुद्धगतेर्निलिल्ये । अथ द्विगुणरणरणकदूनो **वत्सराजो वासवदत्ता**वैवाहिकचित्रफलके **वासवदत्ताजनन्या** स्वात्मविनोदाय जामातृवात्सल्याद् यदृच्छया प्रहिते तां **पद्मावत्या** सह पश्यन् "अस्ति चित्रदृष्ट**वासवदत्ता**रूपसंवादिनी काचि**दावन्तिका** नाम मदन्तःपुरे, सा हि ब्राह्मणेन केनचित् स्वभगिनीति रक्षणार्थं मयि न्यस्ता" इति तया बोधितोऽभवत् । ततस्तया तामानीताम् **उदयनः** प्रत्यभिज्ञाय **यौगन्धरायणेन** च कपटब्राह्मणेन न्यासप्रत्यर्पणार्थिना तत्कालसन्निहितेन समागम्य विदितसफलात्ममन्त्रितन्त्रमुदितस्ताभ्यां पत्नीभ्यां सहितः सौख्यानि निर्विवेशेति ॥

# पात्राणि ।

---

**पुरुषाः—**

| | | |
|---|---|---|
| राजा | = | उदयननामा वत्सराजः । |
| यौगन्धरायणः | = | वत्सराजमन्त्री । |
| विदूषकः | = | वसन्तकनामा वत्सराजनर्मसचिवः । |
| ब्रह्मचारी | = | लावाणकेऽधीती । |
| काञ्चुकीयः | = | राजकुले भृत्यः । |
| संभषकः<br>भटः | = | पद्मावतीभृत्यौ । |

**स्त्रियः—**

| | | |
|---|---|---|
| वासवदत्ता | = | उदयनस्य प्रथममहिषी । इयमावन्तिका च । |
| पद्मावती | = | मगधराजस्य दर्शकनाम्नो भगिनी । |
| तापसी | | |
| चेटी | = | पद्मावत्याः किङ्करी । |
| मधुकरिका<br>पद्मिनिका | = | पद्मावत्याः सख्यौ चेट्यौ वा । |
| धात्री | = | पद्मावत्या उपमाता । |
| विजया | = | वत्सराजगृहे प्रतिहारी । |
| धात्री | = | वासवदत्ताया उपमाता । |

---

॥ श्रीः ॥

श्रीगणेशाय नमः ।

महाकविश्रीभासप्रणीतं

# स्वप्नवासवदत्तम् ।

---

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः —**

*उदयनवेन्दुसवर्णावासवदत्ताबलौ बलस्य त्वाम् ।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम् ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि । अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि ।

(नेपथ्ये)

(क) उस्सरह उस्सरह अय्या ! उस्सरह ।

**सूत्रधारः —** भवतु, विज्ञातम् ।

---

(क) उत्सरतोत्सरतार्याः ! उत्सरत ।

---

* उदयनवेन्दुसवर्णौ उदयकालनूतनचन्द्रतुल्यवर्णौ दत्तमासवं मद्यं यस्यै सा आसवदत्ता । दत्तशब्दपरनिपात आहिताग्न्यादि(२. २. ३७)त्वात्, तथाभूताबला याभ्यां तौ आसवदत्ताबलौ पद्मावतीर्णपूर्णौ लक्ष्म्याविर्भावसमृद्धौ वसन्ते कम्रौ मनोज्ञौ तत्कालोचितशृङ्गारवेषपरिग्रहात्, वसन्ताख्यतालविशेषमनोज्ञौ वा बलस्य बलभद्रस्य भुजौ त्वां पातां रक्षताम् । अत्र मुद्रालङ्कारनिभया प्रधानपात्राणाम् उदयन–वासवदत्ता–पद्मावती–वसन्तकानां निर्देशः कृतः ।

भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः ।
पृष्ठमुत्सार्यते सर्वस्तपोवनगतो जनः ॥ २ ॥

(निष्क्रान्तः)

स्थापना ।

---

(प्रविश्य)[१]

भटौ[२] — (क) उस्सरह उस्सरह अय्या ! उस्सरह ।

(ततः प्रविशति परिव्राजकवेषो यौगन्धरायणः आवन्तिकावेषधारिणी वासवदत्ता च)

**यौगन्धरायणः** — (कर्णं दत्त्वा) कथमिहाप्युत्सार्यते । कुतः,

धीरस्याश्रमसंश्रितस्य वसतस्तुष्टस्य वन्यैः फलै-
र्मानार्हस्य जनस्य वल्कलवतस्त्रासः समुत्पाद्यते ।
उत्सिक्तो विनयादपेतपुरुषो भाग्यैश्चलैर्विस्मितः
कोऽ[३]यं भो निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञया[४] ॥ ३ ॥

**वासवदत्ता** — (ख) अय्य ! को एसो उस्सारेदि ।

**यौगन्धरायणः** — योऽधमो(द्)दामाह्वानमुत्सारयति ।

**वासवदत्ता** — (ग) अय्य ! ण हि[५] एव्वं वत्तुकामा, अहं वि णाम[६] उस्सारइदव्वा होमि त्ति ।

---

(क) उत्सरतोत्सरतार्याः ! उत्सरत ।

(ख) आर्य ! क एष उत्सारयति ।

(ग) आर्य ! न ह्येवं वक्तुकामा, अहमपि नामोत्सारयितव्या भवामीति ।

---

१. 'ततः प्रविशतः साधारणौ' ख. पाठः. २. 'साधारणौ — उ' ख. पाठः. ३. 'सो' ख. पाठः. ४. 'त्युद्धुकौ ॥' ख. पाठः. ५. 'हु' ख. पाठः. ६. 'दाव उ' ख. पाठः.

**यौगन्धरायणः**[1] — भवति! एवमनिर्ज्ञातानि दैवतान्यवधूयन्ते ।

**वासवदत्ता** —(क) अय्य! तह[2] परिस्समो परिखेदं ण उप्पादेदि, जह अअं परिभवो ।

**यौगन्धरायणः** — भुक्तोज्झित एष विषयो[3]ऽत्रभवत्या । नात्र चिन्ता कार्या । कुतः,

पूर्वं त्वयाप्यभिमतं गतमे(वा?वमा)सी-
च्छ्लाघ्यं गमिष्य(ति?सि) पुनर्विजयेन भर्तुः ।
कालक्रमेण जगतः परिवर्तमाना
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ॥ ४ ॥

**भटौ**[4] — (ख) उस्सरह उस्सरह[5] ।

(ततः प्रविशति काञ्चुकीयः)

**काञ्चुकीयः** — सम्भषक! नखलु नखलूत्सारणा कार्या । पश्य,

परिहरतु भवान्[6] नृपापवादं
न परुषमाश्रमवासिषु प्रयोज्यम्[7] ।
नगरपरिभवान्[8] विमोक्तुमेते
वनमभिगम्य मनस्विनो वसन्ति ॥ ५ ॥

---

(क) आर्य! तथा परिश्रमः परिखेदं नोत्पादयति, यथायं परिभवः ।

(ख) उत्सरतोत्सरत ।

---

१. 'णः —एं' ख. पाठः. २. 'त्तहं प' ख. पाठः. ३. 'यस्तत्र' ख. पाठः. ४. 'उभौ— उ' ख. पाठः. ५. 'ह अय्या! उस्सरह । त' ख. पाठः. ६. 'वो नृ' क. पाठः. ७. 'ज्य ।' क. पाठः. ८. 'द्धि मो' ख. पाठः.

**उभौ** — (क) अय्य! तह।

(निष्क्रान्तौ)

**यौगन्धरायणः** — हन्त सविज्ञानमस्य दर्शनम्। वत्से! उपसर्पावस्तावदेनम्[1]।

**वासवदत्ता** — (ख) अय्य! तह।

**यौगन्धरायणः** — (उपसृत्य) भोः! किङ्कृतेयमुत्सारणा।

**काञ्चुकीयः** — भोस्तपस्विन्!

**यौगन्धरायणः** —(आत्मगतम्) तपस्विन्निति गुणवान् खल्वयमालापः। अपरिचयात्तु न श्लिष्यते‡ मे मनसि।

**काञ्चुकीयः** — भोः! श्रूयताम्। एषा खलु गुरुभिरभिहितनामधेयस्यास्माकं महाराजदर्शकस्य भगिनी पद्मावती नाम। सैषा नो महाराजमातरं महादेवीमाश्रमस्थामभिगम्यानुज्ञाता[2] तत्रभवत्या राजगृहमेव यास्यति। तद् अद्यास्मिन्नाश्रमपदे वासोऽभिप्रेतोऽस्याः। तद्भवन्तः,

तीर्थोदकानि सामिधः कुसुमानि दर्भान्
स्वैरं वनादुपनयन्तु तपोधनानाम्।
धर्मप्रिया नृपसुता न हि धर्मपीडा-
मिच्छेत् तपस्विषु कुलव्रतमेतदस्याः॥ ६॥

---

(क) आर्य! तथा।
(ख) आर्य! तथा।

---

१. 'नम्। (उपगम्य) भोः' ख. पाठः. २. 'ति। अ' क. पाठः.

‡ कर्मवद्भावो बोद्धव्यः।

*यौगन्धरायणः — (स्वगतम्) एवम् । एषा सा[1] मगधराजपुत्री[2] पद्मावती नाम, या पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति । ततः,

प्रद्वेषो बहुमानो वा सङ्कल्पादुपजायते ।
भर्तृदाराभिलाषित्वादस्यां मे महती स्वता ॥ ७ ॥

वासवदत्ता — (स्वगतम्) (क) राअदारिअत्ति सुणिअ भइणिआसिणेहो वि मे एत्थ सम्पज्जइ ।

(ततः प्रविशति पद्मावती सपरिवारा चेटी[3] च)

चेटी — (ख) एदु[4] एदु भट्टिदारिआ, इदं अस्समपदं पविसदु ।

(ततः प्रविशत्युपविष्टा[5] तापसी)

तापसी — (ग) साअदं राअदारिआए ।

वासवदत्ता — (स्वगतम्) (घ) इअं सा राअदारिआ । अभिजणाणुरूवं खु से रूवं ।

पद्मावती — (ङ) अय्ये ! वन्दामि ।

तापसी[6] — (च) चिरं जीव । पविस जादे ! पविस । तवोवणाणि णाम अदिहिजणस्स सअगेहं ।

---

(क) राजदारिकेति श्रुत्वा भगिनिकास्नेहोऽपि मेऽत्र संपद्यते ।
(ख) एत्वेतु भर्तृदारिका, इदमाश्रमपदं प्रविशतु ।
(ग) स्वागतं राजदारिकायाः ।
(घ) इयं सा राजदारिका । अभिजनानुरूपं खल्वस्या रूपम् ।
(ङ) आर्ये ! वन्दे ।
(च) चिरं जीव । प्रविश जाते ! प्रविश । तपोवनानि नामातिथिजनस्य स्वगेहम् ।

---

१. 'सा रा' ख. पाठः. २. 'त्री या' क. पाठः. ३. 'टी ए' क. पाठः. ४. 'इदो इदो भ' ख. पाठः. ५. 'ति ता' ख. पाठः. ६. 'सी प' क. पाठः.

---

* इयं यौगन्धरायणोक्तिः समनन्तरवासवदत्तोक्त्युत्तरं पठ्यते ख. पुस्तके ।

**पद्मावती** — (क) भोदु भोदु । अय्ये! विस्ससि(हे?)हि । इमिणा बहुमाणवअणेण अणुग्गहिदह्मि[1] ।

**वासवदत्ता** — (स्वगतम्) (ख) ण हि[2] रूवं एव्व, वाआ वि खु से महुरा ।

**तापसी** — (ग) भद्दे! इम दाव भद्दमुहस्स भइणिआ । कोचि राआ ण व(दे?रे)दि ।

**चेटी** — (घ) अत्थि राआ पज्जोदो णाम उज्जइणीए । सो दारअस्स कारणादो दूदसम्पादं करेदि ।

**वासवदत्ता** — (आत्मगतम्) (ङ) भोदु भोदु । एसा अ अत्तणीआ दाणिं संवुत्ता ।

**तापसी** — (च) अहो खु इअं आइदी । इमस्स बहुमाणस्स उभआणि[3] राअउळाणि महत्तराणि[4] त्ति सुणीअदि ।

**पद्मावती** — (छ) अय्य! किं दिट्ठो मुणिजणो अत्ताणं अणुग्गहीदुं इच्छदि त्ति ।

---

(क) भवतु भवतु । आर्ये! विश्वसिहि । अनेन बहुमानवचनेनानुगृहीतास्मि ।

(ख) न हि रूपमेव, वागपि खल्वस्या मधुरा ।

(ग) भद्रे! इयं तावद् भद्रमुखस्य भगिनिका । कश्चिद् राजा न वरयति ।

(घ) अस्ति राजा प्रद्योतो नामोज्जयिन्याः । स दारकस्य कारणाद् दूतसम्पातं करोति ।

(ङ) भवतु भवतु । एषा चात्मीयेदानीं संवृत्ता ।

(च) अहो खल्वियमाकृतिः । अस्य बहुमानस्योभे राजकुले महत्तरे इति श्रूयते ।

(छ) आर्य! किं दृष्टो मुनिजन आत्मानमनुग्रहीतुमिच्छतीति ।

---

१. 'ह्मि अ ।' क. पाठः. २. 'हु' ख. पाठः. ३. 'णि म' क. पाठः. ४. 'न्दि' क. पाठः.

**काञ्चुकीयः**—यदभिप्रेतं भवत्या । भोभो आश्रमवासिनस्तपस्विनः! शृण्वन्तु शृण्वन्तु भवन्तः। इहात्रभवती मगधराजपुत्री अहो विस्रम्भेणोत्पादितविस्रम्भा धर्मार्थमर्थेनोपनिमन्त्रयते ।

कस्यार्थः कलशेन को मृगयते वासो यथानिश्चितं
दीक्षां पारितवान् किमिच्छति पुनर्देयं गुरोर्यद् भवेत् ।
आत्मानुग्रहमिच्छतीह नृपजा धर्माभिरामप्रिया
यद्यस्यास्ति §समीप्सितं वदतु तत् कस्याद्य किं दीयताम् ॥

**यौगन्धरायणः**—हन्त दृष्ट उपायः । भोः! अहमर्थी ।

**पद्मावती**—(क) दिट्ठिआ सहलं[2] मे तवोवणाभिगमणं ।

**तापसी**—(ख) संतुट्ठतपस्सिजणं इदं अस्समपदं । आअन्तुएण इमिणा होदव्वं ।

**काञ्चुकीयः**—भोः! किं क्रियताम् ।

**यौगन्धरायणः**—इयं मे स्वसा । प्रोषितभर्तृकामिमामिच्छाम्यत्रभवत्या कञ्चित् कालं परिपाल्यमानाम्। कुतः,

कार्यं नैवार्थैर्नापि भोगैर्न वस्त्रै-
र्नाहं काषायं वृत्तिहेतोः प्रपन्नः ।
धीरा कन्येयं दृष्टधर्मप्रचारा
शक्ता चारित्रं रक्षितुं मे भगिन्याः ॥ ९ ॥

(क) दिष्ट्या सफलं मे तपोवनाभिगमनम् ।

(ख) सन्तुष्टतपस्विजनमिदमाश्रमपदम् । आगन्तुकेनानेन भवितव्यम् ।

१. 'वतु भवत्यै' ख. पाठः. २. 'व' क. पाठः.

§ 'स ईप्सितं' इति स्यात् ।

**वासवदत्ता** — (आत्मगतम्) (क) हं[1] इह मं णिक्खिविदुकामो अय्ययोगन्धरायणो । होदु, अविआरिअ कमं ण करिस्सदि ।

**काञ्चुकीयः** — भवति! महती खल्वस्य व्यपाश्रयणा‡ । कथं प्रतिजानीमः । कुतः,

सुखमर्थो भवेद् दातुं सुखं प्राणाः सुखं तपः ।
सुखमन्यद् भवेत् सर्वं दुःखं न्यासस्य रक्षणम् ॥ १० ॥

**पद्मावती** — (ख) अय्य! पढमं उग्घोसिअ को किं इच्छदि त्ति अजुत्तं दाणिं विआरिदुं । जं एसो भणादि, तं अणुचिट्ठदु अय्यो ।

**काञ्चुकीयः** — अनुरूपमेतद्भवत्याभिहितम् ।

**चेटी** — (ग) चिरं जीवदु भट्टिदारिआ एवं सच्चवादिणी ।

**तापसी** — (घ) चिरं जीवदु भद्दे !

---

(क) हम् इह मां निक्षेप्तुकाम आर्ययौगन्धरायणः । भवतु, अविचार्य क्रमं न करिष्यति ।

(ख) आर्य ! प्रथममुद्घोष्य कः किमिच्छतीत्ययुक्तमिदानीं विचारयितुम् । यदेष भणति, तदनुतिष्ठत्वार्यः ।

(ग) चिरं जीवतु भर्तृदारिकैवं सत्यवादिनी ।

(घ) चिरं जीवतु भद्रे !

---

१. 'हा' ख. पाठः.

---

‡ व्यपाङ्पूर्वात् श्रिञ्धातोर्बाहुलकाद् भावे युच् ।

**काञ्चुकीयः** — भवति! तथा[1]। (उपगम्य) भोः! अभ्युपगतमत्रभवतो भगिन्याः परिपालनमत्रभवत्या ।

**यौगन्धरायणः** — अनुगृहीतोऽस्मि तत्रभवत्या । वत्से! उपसर्पात्रभवतीम् ।

**वासवदत्ता[2]** — (क) का गई । एसा गच्छामि मन्दभाआ ।

**पद्मावती** — (ख) भोदु भोदु । अत्तणीआ दाणिं संवुत्ता।

**तापसी** — (ग) जा ईदिसी से आइदी, इयं वि राअदारिअ त्ति तक्केमि ।

**चेटी** — (घ) सुट्ठु अय्या भणादि । अहं वि अणुहूदसुहत्ति पेक्खामि ।

**यौगन्धरायणः** — हन्त भोः! अर्धमवसितं भारस्य । यथा मन्त्रिभिः सह समर्थितम्, तथा परिणमति । ततः प्रतिष्ठिते स्वामिनि तत्रभवतीमुपनयतो मे इहात्रभवती मगधराजपुत्री विश्वासस्थानं भविष्यति । कुतः,

पद्मावती नरपतेर्महिषी भवित्री
दृष्टा विपत्तिरथ[3] यैः प्रथमं प्रदिष्टा ।

---

(क) का गतिः । एषा गच्छामि मन्दभागा ।

(ख) भवतु भवतु । आत्मीयेदानीं संवृत्ता ।

(ग) या ईदृश्यस्या आकृतिः, इयमपि राजदारिकेति तर्कयामि ।

(घ) सुष्ठु आर्या भणति । अहमपि अनुभूतसुखेति पश्यामि ।

---

१. 'था अ' ख. पाठः. २. 'त्ता ए' ख. पाठः. ३. 'पि' ख. पाठः.

तत्प्रत्ययात् कृतमिदं न हि सिद्धवाक्या-
न्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि ॥ ११ ॥

(ततः प्रविशति ब्रह्मचारी)

**ब्रह्मचारी**—(१ऊर्ध्वमवलोक्य) स्थितो मध्याह्नः। दृढमस्मि परिश्रान्तः। अथ कस्मिन् प्रदेशे २विश्रमयिष्ये। (परिक्रम्य) अभितस्तपोवनेन भवितव्यम्। तथाहि,

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविभवाः सर्वे दयारक्षिताः।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः॥ १२॥

यावत् प्रविशामि। (प्रविश्य) अये आश्रमविरुद्धः खल्वेष *जनः। (अन्यतो विलोक्य) अथवा तपस्विजनोऽप्यत्र। निर्दोषमुपसर्पणम्। अये स्त्रीजनः।

**काञ्चुकीयः**—स्वैरं स्वैरं प्रविशतु भवान्। सर्वजनसाधारणमाश्रमपदं नाम।

**वासवदत्ता**—३हम्।

**पद्मावती**—(क) अम्मो परपुरुसदंसणं परिहरदि अय्या। भोदु, सुपरिवालणीयो खु ४मे णासो।

---

(क) अम्मो परपुरुषदर्शनं परिहरत्यार्या। भवतु, सुपरिपालनीयः खलु मन्न्यासः।

---

१. 'निरूप्य' क. पाठः.　२. 'विश्रमिष्ये'(?) ख. पाठः.　३. 'नुह्म्'(?) ख. पाठः. ४. 'मे णा' ख. पाठः.

---

* जनः काञ्चुकीयः।

**काञ्चुकीयः**—भोः! पूर्वं प्रविष्टाः स्मः। प्रतिगृह्यतामतिथिसत्कारः।

**ब्रह्मचारी**‡—(आचम्य) भवतु भवतु। निवृत्तपरिश्रमोऽस्मि।

**यौगन्धरायणः**—भोः! कुत आगम्यते, क्व गन्तव्यम्, क्वाधिष्ठानमार्यस्य।

**ब्रह्मचारी**—भोः! श्रूयताम्। राजगृहतोऽस्मि। श्रुतिविशेषणार्थं वत्सभूमौ लावाणकं नाम ग्रामस्तत्रोषितवानस्मि।

**वासवदत्ता**—(क) §हा लावाणअं णाम। ळावाणअसंकित्तणेण पुणो णवीकिदो विअ मे सन्दावो।

**यौगन्धरायणः**—अथ परिसमाप्ता विद्या।

**ब्रह्मचारी**—न खलु तावत्।

**यौगन्धरायणः**—यद्यनवसिता विद्या, किमागमनप्रयोजनम्।

**ब्रह्मचारी**—तत्र खल्वतिदारुणं व्यसनं संवृत्तम्।

**यौगन्धरायणः**—कथमिव।

**ब्रह्मचारी**—तत्रोदयनो नाम राजा प्रतिवसति।

**यौगन्धरायणः**—श्रूयते तत्रभवानुदयनः। किं सः।

**ब्रह्मचारी**—तस्यावन्तिराजपुत्री वासवदत्ता नाम पत्नी दृढमभिप्रेता किल।

**यौगन्धरायणः**—भवितव्यम्। ततस्ततः।

**ब्रह्मचारी**—ततस्तस्मिन् मृगयानिष्क्रान्ते राजनि ग्रामदाहेन दग्धा।

---

(क) हा लावाणकं नाम। लावाणकसङ्कीर्तनेन पुनर्नवीकृत इव मे सन्तापः।

---

‡ इतः परं 'भोः! श्रूयताम्' इत्येव ख. पुस्तकपाठः। § 'स्वगतम्' इत्यपेक्षितम्।

**वासवदत्ता**—(क) *अळिअं अळिअं एदं । जीवामि मन्दभाआ ।

**यौगन्धरायणः**—ततस्ततः ।

**ब्रह्मचारी**—ततस्तामभ्यवपत्तुकामो यौगन्धरायणो नाम[1] सचिवस्तस्मिन्नेवाग्नौ पतितः ।

**यौगन्धरायणः**—सत्यं पतित इति । ततस्ततः ।

**ब्रह्मचारी**—ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा तयोर्वियोगजनितसन्तापस्तस्मिन्नेवाग्नौ प्राणान् परित्यक्तुकामोऽमात्यैर्महता यत्नेन वारितः ।

**वासवदत्ता**—(ख) *जाणामि जाणामि अय्यउत्तस्स मइ साणुक्कोसत्तणं ।

**यौगन्धरायणः**—ततस्ततः ।

**ब्रह्मचारी**—ततस्तस्याः शरीरोपभुक्तानि दग्धशेषाण्याभरणानि परिष्वज्य राजा मोहमुपगतः ।

**सर्वे**—हा ।

**वासवदत्ता**—(स्वगतम्) (ग) सकामो दाणिं अय्यजोअन्धराअणो होदु ।

---

(क) अलीकमलीकमेतत् । जीवामि मन्दभागा ।

(ख) जानामि जानाम्यार्यपुत्रस्य मयि सानुक्रोशत्वम् ।

(ग) सकाम इदानीमार्ययौगन्धरायणो भवतु ।

---

१. 'मामात्यस्त' ख. पाठः.

---

* उभयत्र '( स्वगतम् )' इत्यपेक्षितम् ।

**चेटी** — (क) भट्टिदारिए! रोदिदि खु इअं अय्या ।

**पद्मावती** — (ख) साणुक्कोसाए होदव्वं ।

**यौगन्धरायणः** — अथकिम् । प्रकृत्या सानुक्रोशा मे भगिनी । ततस्ततः ।

**ब्रह्मचारी** — ततः शनैः शनैः प्रतिलब्धसंज्ञः संवृत्तः ।

**पद्मावती** — (ग) दिट्ठिआ धरइ, मोहं[1] गदो त्ति सुणिअ [2]सुण्(णं) विअ मे हिअअम् ।

**यौगन्धरायणः** — ततस्ततः ।

**ब्रह्मचारी** — ततः स राजा महीतलपरिसर्पणपांसुपाटल-शरीरः सहसोत्थाय '[3]हा वासवदत्ते! हा अवन्तिराजपुत्रि! हा प्रिये! हा प्रियशिष्ये!' इति किमपि किमपि बहु प्रलपितवान् । किं बहुना,

नैवेदानीं (दुःखि) ताश्चक्रवाका
नैवाप्यन्ये स्त्रीविशेषैर्वियुक्ताः ।
धन्या सा स्त्री यां तथा वेत्ति भर्ता
भर्तृस्नेहात् [4]सा हि दग्धाप्यदग्धा ॥ १३ ॥

---

(क) भर्तृदारिके! रोदिति खल्वियमार्या ।

(ख) सानुक्रोशया भवितव्यम् ।

(ग) दिष्ट्या ध्रियते । मोहं गत इति श्रुत्वा शू(न्य)मिव मे हृदयम् ।

---

१. 'मोहगदो' ख. पाठः. २. 'सुठन्त (?) वि' ख. पाठः. ३. 'हा अवन्तिराजपुत्रि! हा वासवदत्ते! हा प्रि' ख. पाठः. ४. 'सामिद' ख. पाठः.

**यौगन्धरायणः**— अथ भोः! तं तु पर्यवस्थापयितुं न कश्चिद् यत्नवानमात्यः।

**ब्रह्मचारी**—अस्ति रुमण्वान्नामामात्यो दृढं प्रयत्नवांस्तत्र-भवन्तं पर्यवस्थापयितुम्। स हि,

अनाहारे तुल्यः प्रततरुदितक्षामवदनः
शरीरे संस्कारं नृपतिसमदुःखं परिवहन्।
दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिं
नृपः प्राणान् सद्यस्त्यजति यदि तस्याप्युपरमः॥१४॥

**वासवदत्ता**—(क) दिट्ठिआ सुणिक्खित्तो दाणीं अय्यउत्तो।

**यौगन्धरायणः**— (आत्मगतम्) अहो *महद्भारमुद्वहति रुमण्वान्। कुतः,

सविश्रमो ह्ययं ‡भारः प्रसक्तस्तस्य तु श्रमः।
तस्मिन् सर्वमधीनं हि यत्राधीनो नराधिपः॥ १५॥

(प्रकाशम्) अथ भोः! पर्यवस्थापित इदानीं स राजा।

**ब्रह्मचारी**—तदिदानीं न जाने। इह तया सह हसितम्, इह तया सह कथितम्, इह तया सह पर्युषितम्, इह

---

(क) दिष्ट्या सुनिक्षिप्त इदानीमार्यपुत्रः।

---

१. 'स' ख. पाठः.

---

* महतो दुरुद्वहभारवहनक्षमस्य भारं महद्भारम्। ‡ अयं नराधिपदाररक्षणरूपो मदीयो भारः सविश्रमः पद्मावत्यां तन्न्यसनादित्यर्थः। तस्य रुमण्वतः प्रसक्तो भारस्तु नराधिपरक्षणलक्षणः श्रमः श्रमहेतुः।

तया सह कुपितम्, इत्येवं तं विलपन्तं राजानममात्यैर्महता यत्नेन तस्माद् ग्रामाद् गृहीत्वापक्रान्तम् । ततो निष्क्रान्ते राजनि प्रोषितनक्षत्रचन्द्रमिव नभोऽरमणीयः संवृत्तः स ग्रामः। ततोऽहमपि निर्गतोऽस्मि ।

**तापसी** — (क) सो खु गुणवन्तो णाम राओ, जो आअन्तुएण वि इमिणा एव्वं पसंसीअदि ।

**चेटी** — (ख) भट्टिदारिए! किंणुखु अवरा इत्थिआ तस्स हत्थं गमिस्सदि ।

**पद्मावती** — (ग) मम हिअएण एव्व सह मन्तिदं ।

**ब्रह्मचारी** — *आपृच्छामि भवन्तौ । [2]गच्छामस्तावत् ।

**उभौ** — गम्यतामर्थसिद्धये ।

**ब्रह्मचारी** — तथास्तु । (निष्क्रान्तः)

**यौगन्धरायणः** — अहमपि तत्रभवत्याभ्यनुज्ञातो गन्तुमि[3]च्छामि ।

**काञ्चुकीयः** — तत्रभवत्याभ्यनुज्ञातो गन्तुमिच्छति किल।

---

(क) स खलु गुणवान् नाम राजा, य आगन्तुकेनाप्यनेनैवं प्रशंस्यते ।

(ख) भर्तृदारिके! किन्नुखलु अपरा स्त्री तस्य हस्तं गमिष्यति ।

(ग) मम हृदयेनैव सह मन्त्रितम् ।

---

१. 'आ अइएणा (?) त्रि' क. पाठः. २. 'साधयाम' ख. पाठः. ३. 'मि। पद्मा' क. पाठः.

---

* 'आङि नुपृच्छ्योः' इति तङत्र न गणितो महाकविना । ख. संज्ञे त्वादर्शे 'आपृच्छामि भवन्तौ' इति न पठ्यते ।

**पद्मावती** — (क) अय्यस्स भइणिआ अय्येण विना उक्कण्ठिस्सिदि।

**यौगन्धरायणः** — साधुजनहस्तं गतैषा नोत्कण्ठिष्यति†। (काञ्चुकीयमवलोक्य) गच्छामस्तावत्।

**काञ्चुकीयः** — गच्छतु भवान् पुनर्दर्शनाय।

**यौगन्धरायणः** — [1]तथास्तु। (निष्क्रान्तः)

**काञ्चुकीयः** — समय इदानीमभ्यन्तरं प्रवेष्टुम्।

**पद्मावती** — (ख) अय्ये! वन्दामि।

**तापसी** — (ग) जादे! तव सदिसं भत्तारं लभेहि।

**वासवदत्ता**[2] — (घ) अय्ये! गच्छामि दाव अहं।

**तापसी** — (ङ) तुवं वि अइरेण भत्तारं [3]समासादेहि।

**वासवदत्ता** — (च) अणुग्गहीदह्मि।

---

(क) आर्यस्य भगिनिकार्येण विनोत्कण्ठिष्यते।

(ख) आर्ये! वन्दे।

(ग) जाते! तव सदृशं भर्तारं लभस्व।

(घ) आर्ये! गच्छामि तावदहम्।

(ङ) त्वमपि अचिरेण भर्तारं समासादय।

(च) अनुगृहीतास्मि।

---

१. 'बाढम्' ख. पाठः. २. 'त्ता ग' ख. पाठः. ३. 'लभेहि' ख. पाठः.

---

† इहानुदात्तेत्त्वलक्षणमात्मनेपदं न कृतमनित्यत्वात्।

**काञ्चुकीयः**—तदागम्यताम्, इत इतो भवति![1] । सम्प्रति हि,

खगा वासोपेताः सलिलमवगाढो मुनिजनः
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।
परिभ्रष्टो दूराद् रविरपि च संक्षिप्तकिरणो
रथं व्यावृत्यासौ प्रविशति शनैरस्तशिखरम् ॥ १६ ॥

(निष्क्रान्ताः सर्वे)

प्रथमोऽङ्कः ।

---

१. 'यः —इत इतो भवत्यः (?) स' ख. पाठः.

## अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति चेटी)

**चेटी —** (क) कुञ्जरिए! कुञ्जरिए! कहिं कहिं भट्टिदारिआ पदुमावदी । किं भणासि, एसा भट्टिदारिआ माहवीळदामण्डवस्स पस्सदो कन्दुएण कीळदि[1]त्ति । जाव भट्टिदारिअं उवसप्पामि । (परिक्रम्य) अम्मो इअं भट्टिदारिआ उक्करिदकण्णचूळिएण वाआमसञ्जादसेदबिन्दुविइत्तिदेण पारिस्सन्तरमणीअदंसणेण कन्दुएण कीळन्दी इदो[2] एव्व आअच्छदि। जाव उवसप्पिस्सं¶।

(निष्क्रान्ता)

प्रवेशकः ।

---

(ततः प्रविशति कन्दुकेन क्रीडन्ती पद्मावती सपरिवारा[3] वासवदत्तया सह )

**वासवदत्ता —** (ख) हळा! एसो दे कन्दुओ।

---

(क) कुञ्जरिके! कुञ्जरिके! कुत्र कुत्र भर्तृदारिका पद्मावती । किं भणासि, एषा भर्तृदारिका माधवीलतामण्डपस्य पार्श्वतः कन्दुकेन क्रीडतीति । यावद् भर्तृदारिकामुपसर्पामि । अम्मो इयं भर्तृदारिका उत्क्षिप्तकर्णचूलिकेन व्यायामसञ्जातस्वेदबिन्दुविचित्रितेन स्पृश्यमानरमणीयदर्शनेन कन्दुकेन क्रीडन्तीत एवागच्छाति । यावदुपसर्पिष्यामि ।

(ख) हला! एष ते कन्दुकः ।

---

१. 'ळन्दी त्ति' क. पाठः. २. 'दित्ति जा' क. पाठः. ३. 'रा आवन्तिकावेषधारिणी वासवदत्ता च' ख. पाठः.

---

¶ 'उवसप्पामि' इत्येवालम् ।

**पद्मावती** — (क) अय्ये! भोदु दाणिं एत्तअं।

**वासवदत्ता** — (ख) हळा! अदिचिरं कन्दुएण कीळिअ अहिअसञ्जादराआ परकेरआ विअ दे हत्था संवुत्ता।

**चेटी** — (ग) कीळदु कीळदु दाव भट्टिदारिआ। णिव्वत्तीअदु दाव अअं कण्णाभावरमणिज्जो काळो।

**पद्मावती** — (घ) अय्ये! किं दाणिं मं ओहसिदुं विअ णिज्झाअसि।

**वासवदत्ता** — (ङ) णहि णहि। हळा! अधिअं अज्ज †सोहदि। अभिदो विअ दे[1] अज्ज वरमुखं पेक्खामि।

**पद्मावती** — (च) अवेहि। मा दाणिं मं ओहस।

---

(क) आर्ये! भवत्विदानीमेतावत्।

(ख) हळा! अतिचिरं कन्दुकेन क्रीडित्वाधिकसञ्जातरागौ परकीयाविव ते हस्तौ संवृत्तौ।

(ग) क्रीडतु क्रीडतु तावद् भर्तृदारिका। निर्वर्त्यतां तावद् अयं कन्याभावरमणीयः कालः।

(घ) आर्ये! किमिदानीं मामपहसितुमिव निध्यायासि।

(ङ) नहि नहि। हळा! अधिकमद्य शोभसे। अभित इव तेऽद्य वरमुखं पश्यामि।

(च) अपेहि। मेदानीं मामपहस।

---

१. 'दे व' ख. पाठः.

---

† 'सोहसि' इति स्यात्।

**वासवदत्ता** — (क) एसा तुंण्णिआ भविस्स(दि) महासेण-वहूए।

**पद्मावती** — (ख) को एसो महासेणो णाम।

**वासवदत्ता** — (ग) अत्थि उज्जइणीओ राआ पज्जोदो णाम। तस्स बळ‡परिणामणिव्वुत्तं णामहेअं महासेणो त्ति।

**चेटी** — (घ) भट्टिदारिआ तेण[2] भत्ता सह सम्बन्धं[3] णेच्छदि।

**वासवदत्ता** — (ङ) अह केण खु दाणिं अभिळसदि।

**चेटी** — (च) अत्थि वच्छराओ उअ[4]अणो णाम। तस्स गुणाणि भट्टिदारिआ अभिळसदि।

**वासवदत्ता** — (आत्मगतम्) (छ) अय्यउत्तं भत्तारं अभिळ-सदि। (प्रकाशम्) केण कारणेण।

**चेटी** — (ज) साणुक्कोसो त्ति।

---

(क) एषा (स्नुषा) भविष्यति महासेनवध्वाः।

(ख) क एष महासेनो नाम।

(ग) अस्ति उज्जयिन्या राजा प्रद्योतो नाम। तस्य बलपरिणामनिर्वृत्तं नामधेयं महासेन इति।

(घ) भर्तृदारिका तेन भर्त्रा सह संबन्धं नेच्छति।

(ङ) अथ केन खल्विदानीमभिलषति।

(च) अस्ति वत्सराज उदयनो नाम। तस्य गुणान् भर्तृदारिकाभिलषति।

(छ) आर्यपुत्रं भर्तारमभिलषति। केन कारणेन।

(ज) सानुक्रोश इति।

---

१. 'इ' ख. पाठः. २. 'ण (धु?) भ' ख. पाठः. ३. 'न्धामिच्छ' क. पाठः. ४. 'दअ' ख. पाठः.

---

‡ 'परिमाण' इति कदाचित् स्यात्।

**वासवदत्ता** — (आत्मगतम्) (क) जाणामि जाणामि । अअं वि[1] जणो एव्वं उम्मादिदो ।

**चेटी** — (ख) भट्टिदारिए! जदि सो राआ विरूवो भवे ।

**वासवदत्ता** — (ग) णहि णहि । दंसणिय्यो एव्व ।

**पद्मावती** — (घ) अय्ये! कहं तुवं जाणासि ।

**वासवदत्ता** — (आत्मगतम्) (ङ) अय्यउत्तपक्खवादेण अदिक्कन्दो समुदाआरो । किं दाणिं करिस्सं । होदु दिट्ठं । (प्रकाशम्) हळा! एव्वं उज्जइणीओ जणो मन्तेदि ।

**पद्मावती** — (च) जुज्जइ । ण खु एसो उज्जइणीदुव्ळहो । सव्वजणमणोभिरामं खु सोभग्गं णाम ।

(प्रविश्य)[2]

**धात्री** — (छ) जेदु भट्टिदारिआ । भट्टिदारिए! दिण्णासि ।

---

(क) जानामि जानामि । अयमपि जन एवमुन्मादितः ।

(ख) यदि स राजा विरूपो भवेत् ।

(ग) भर्तृदारिके! नहि नहि । दर्शनीय एव ।

(घ) आर्ये! कथं त्वं जानासि ।

(ङ) आर्यपुत्रपक्षपातेनातिक्रान्तः समुदाचारः । किमिदानीं करिष्यामि । भवतु दृष्टम् । हळा! एवमुज्जायिन्या जनो मन्त्रयते ।

(च) युज्यते । न खल्वेष उज्जयिनीदुर्लभः । सर्वजनमनोभिरामं खलु सौभाग्यं नाम ।

(छ) जयतु भर्तृदारिका । भर्तृदारिके! दत्तासि ।

---

१. 'विश्व ज' ख. पाठः. २. 'ततः प्रविशति धात्री' क. पाठः.

**वासवदत्ता**— (क) अय्ये! कस्स।

**धात्री**— (ख) वच्छराअस्स उदअणस्स।

**वासवदत्ता**— (ग) अह कुसली सो राआ।

**धात्री**— (घ) कुसली सो आअदो। *तस्स भट्टिदारिआ पडिच्छिदा अ।

**वासवदत्ता**— (ङ) अच्चाहिदं[1]।

**धात्री**— (च) किं एत्थ अच्चाहिदं।

**वासवदत्ता**— (छ) ण हु किञ्चि। तह णाम सन्त-प्पिअ उदासीणो होदि त्ति।

**धात्री**— (ज) अय्ये! आअमप्पहाणाणि सुलहपय्यवत्थाणाणि[2] महापुरुसहिअआणि होन्ति।

---

(क) आर्ये! कस्मै।

(ख) वत्सराजायोदयनाय।

(ग) अथ कुशली स राजा।

(घ) कुशली स आगतः। तस्य भर्तृदारिका प्रतीष्टा च।

(ङ) अत्याहितम्।

(च) किमत्रात्याहितम्।

(छ) न खलु किञ्चित्। तथा नाम सन्तप्योदासीनो भवतीति।

(ज) आर्ये! आगमप्रधानानि सुलभपर्यवस्थानानि महापुरुषहृदयानि भवन्ति।

---

१. 'दं खु एदम्' ख. पाठः.  २. 'त्थावणा' ख. पाठः.

---

* तेनेत्यर्थः।

**वासवदत्ता** — (क) अय्ये! सअं एव्व तेण वरिदा ।

**धात्री** — (ख) णहि णहि । अण्णप्पओअणेण इह आअदस्स अभिजणविण्णाणवओरूवं पेक्खिअ सअं एव्व महाराएण दिण्णा ।

**वासवदत्ता** — (आत्मगतम्) (ग) एव्वं । अणवरद्धो दाणिं एत्थ अय्यउत्तो ।

(प्रविश्यापरा)

**चेटी** — (घ) तुवरदु तुवरदु दाव [1]अय्या । अज्ज एव्व किळ सोभणं णक्खत्तं । अज्ज एव्व कोदुअमङ्गळं कादव्वं त्ति अह्माणं भट्टिणी भणादि ।

**वासवदत्ता** — (ङ) (आत्मगतम्) जह जह तुवरदि, तह तह [3]अन्धीक(दा?र)इ मे हिअअं ।

**धात्री** — (च) एदु एदु भट्टिदारिआ ।

(निष्क्रान्ताः सर्वे)

द्वितीयोऽङ्कः ।

---

(क) आर्ये ! स्वयमेव तेन वृता ।

(ख) नहि नहि । अन्यप्रयोजनेनेहागतस्याभिजनविज्ञानवयोरूपं दृष्ट्वा स्वयमेव महाराजेन दत्ता ।

(ग) एवम् । अनपराद्ध इदानीमत्रार्यपुत्रः ।

(घ) त्वरतां त्वरतां तावदार्या । अद्यैव किल शोभनं नक्षत्रम् । अद्यैव कौतुकमङ्गलं कर्तव्यमिति अस्माकं भट्टिनी भणति ।

(ङ) यथा यथा त्वरते, तथा तथान्धीक्रियते मे हृदयम् ।

(च) एत्वेतु भर्तृदारिका ।

---

१. 'राधो दाणिं अय्य' क. पाठः. २. 'भट्टिदारिआ । अ' ख. पाठः. ३. 'अन्धआरेण पिहिदं विअ मे' ख. पाठः.

## अथ तृतीयोऽङ्कः ।

(ततः प्रविशति[1] विचिन्तयन्ती वासवदत्ता)

**वासवदत्ता** — (क) विवाहामोदसङ्कुळे अन्तेउरचउस्साळे परित्तजिअ पदुमावदिं इह आअदह्मि पमदवणं । जाव दाणिं भागधेयणि(वु?व्वु)त्तं[2] दुःखं विणोदेमि । (परिक्रम्य) अहो अच्चाहिदं । अय्यउत्तो वि णाम परकेरओ संवुत्तो । जाव उवविसामि । (उपविश्य) धण्णा खु चक्कवाअवहू, जा अण्णोण्णविरहिदा ण जीवइ । ण खु अहं पाणाणि परित्तजामि । अय्यउत्तं पेक्खामि त्ति एदिणा मणोरहेण जीवामि मन्दभाआ ।

(ततः प्रविशति पुष्पाणि गृहीत्वा चेटी)

**चेटी** — (ख) कहिंणुखु गदा अय्या आवन्तिआ । (परिक्रम्यावलोक्य) अम्मो[3] इअं चिन्तासुण्णहिअआ णीहारपडिहदचन्दळेहा विअ अमण्डिदभद्दअं वेसं धारअन्दी पिअङ्गुसिळावट्टए उव-

---

(क) विवाहामोदसङ्कुले अन्तःपुरचतुश्शाले परित्यज्य पद्मावतीमिहागतास्मि प्रमदवनम् । यावदिदानीं भागधेयनिर्वृत्तं दुःखं विनोदयामि । अहो अत्याहितम् । आर्यपुत्रोऽपि नाम परकीयः संवृत्तः । यावद् उपविशामि । धन्या खलु चक्रवाकवधूः, यान्योन्यविरहिता न जीवति । न खल्वहं प्राणान् परित्यजामि । आर्यपुत्रं पश्यामीति एतेन मनोरथेन जीवामि मन्दभागा ।

(ख) कनुखलु गता आर्यावन्तिका । अम्मो इयं चिन्ताशून्यहृदया नीहारप्रतिहतचन्द्रलेखेवामण्डितभद्रकं वेषं धारयन्ती प्रियङ्गुशिलापट्टके उपविष्टा । यावदुप-

---

१. 'ति वा' क. पाठः. २. 'णित्तं (?) ख. पाठः. ३. 'अह्मो इ' ख. पाठः.

विट्ठा । जाव उवसप्पामि । (उपसृत्य) अय्ये आवन्तिए! को काळो, तुमं अण्णेसामि ।

**वासवदत्ता[1]** — (क) किण्णिमित्तं ।

**चेटी** — (ख) अह्माअं भट्टिणी[2] भणादि — महाकुळप्पसूदा सिणिद्धा णिउणा त्ति। इमं दाव कोदुअमाळिअं गुंह्मदु[3] अय्या ।

**वासवदत्ता[4]** — (ग) अह कस्स किळ गुह्मिदव्वं ।

**चेटी** — (घ) अह्माअं भट्टिदारिआए ।

**वासवदत्ता** — (ङ) (आत्मगतम्) एदं वि मए कत्तव्वं आसी। अहो अकरुणा खु इस्सरा ।

**चेटी** — (च) अय्ये! मा दाणिं अण्णं[5] चिन्तिअ । एसो जामादुओ मणिभूमीए ह्णाअदि । सिग्घं दाव गुह्मदु अय्या ।

---

सर्पामि । आर्ये आवन्तिके! कः कालः, त्वामन्विष्यामि ।

(क) किन्निमित्तम् ।

(ख) अस्माकं भट्टिनी भणति—महाकुलप्रसूता स्निग्धा निपुणेति । इमां तावत् कौतुकमालिकां गुम्फत्वार्या ।

(ग) अथ कस्मै किल गुम्फितव्यम् ।

(घ) अस्माकं भर्तृदारिकायै ।

(ङ) एतदपि मया कर्तव्यमासीत् । अहो अकरुणाः खल्वीश्वराः ।

(च) आर्ये! मेदानीमन्यच्चिन्तयित्वा। एष जामाता मणिभूम्यां स्नायति। शीघ्रं तावद् गुम्फत्वार्या ।

---

१. 'त्ता—(आत्मगतम्) कि' क. पाठः. २. 'णीदारिआ भ' क. पाठः. ३. 'गुंहदु किळ भ' ख. पाठः. ४. 'त्ता–क' ख. पाठः. ५. 'अणुचि' ख. पाठः.

**वासवदत्ता**—(आत्मगतम्) (क) ण सक्कुणोमि अण्णं चिन्तेदुं। (प्रकाशम्) हळा! किं दिट्ठो जामादुओ।

**चेटी**—(ख) आम दिट्ठो भट्टिदारिआए सिणेहेण अह्माअं कोदूहळेण अ।

**वासवदत्ता**—(ग) कीदिसो जामादुओ।

**चेटी**—(घ) अय्ये! भणामि दाव, ण ईरिसो[1] दिट्ठपुरुवो।

**वासवदत्ता**—(ङ) हळा! भणाहि भणाहि, किं दंसणीओ।

**चेटी**—(च) सअं खु भअवं सरचावहीणो कामदेवो[2] त्ति।

**वासवदत्ता**—(छ) होदु[3] एत्तअं।

**चेटी**—(ज) किण्णिमित्तं वारेसि।

**वासवदत्ता**—(झ) अजुत्तं परपुरुससङ्कित्तणं सोदुं।

**चेटी**—(ञ) तेण हि गुह्मदु[4] अय्या सिग्घं।

---

(क) न शक्नोम्यन्यच्चिन्तयितुम्। हला! किं दृष्टो जामाता।

(ख) आं दृष्टो भर्तृदारिकायाः स्नेहेनास्माकं कौतूहलेन च।

(ग) कीदृशो जामाता।

(घ) आर्ये! भणामि तावद्, नेदृशो दृष्टपूर्वः।

(ङ) हला! भण भण, किं दर्शनीयः।

(च) स्वयं खलु भगवाञ्छरचापहीनः कामदेव इति।

(छ) भवत्वेतावत्।

(ज) किन्निमित्तं वारयसि।

(झ) अयुक्तं परपुरुषसङ्कीर्तनं श्रोतुम्।

(ञ) तेन हि गुम्फत्वार्या शीघ्रम्।

---

१. 'दि' क. पाठः. २. 'कामो त्ति' क. पाठः. ३. 'दु दाणिं एं' ख. पाठः. ४. 'दु सिं' ख. पाठः.

**वासवदत्ता** — (क) आणेहि । (आत्मगतम्) इअं गुह्णामि मन्दभाआ । (वर्जयित्वा[1]* विलोक्य) इमं दाव ओसहं किं णाम ।

**चेटी** — (ख) अविहवाकरणं णाम ।

**वासवदत्ता**—(ग) (आत्मगतम्) इदं बहुसो गुह्मिदव्वं मम अ पदुमावदीए अ । (प्रकाशम्) इमं दाव ओसहं किं णाम ।

**चेटी** — (घ) सवत्तिमद्दणं णाम ।

**वासवदत्ता** —(ङ) इदं ण गुह्मिदव्वं ।

**चेटी** — (च) कीस ।

**वासवदत्ता**— (छ) उवरदा तस्स भाय्या, तं णिप्पओअणं त्ति ।

(प्रविश्यापरा)

**चेटी** — (ज) तुवरदु[2] तुवरदु अय्या । एसो जामादुओ अविहवाहि अब्भन्तरचउस्सालं पवेसीअदि ।

---

(क) आनय । इयं गुम्फामि मन्दभागा । इदं तावदौषधं किं नाम ।

(ख) अविधवाकरणं नाम ।

(ग) इदं बहुशो गुम्फितव्यं मम च पद्मावत्याश्च । इदं तावदौषधं किं नाम ।

(घ) सपत्नीमर्दनं नाम ।

(ङ) इदं न गुम्फितव्यम् ।

(च) कस्मात् ।

(छ) उपरता तस्य भार्या, तन्निष्प्रयोजनमिति ।

(ज) त्वरतां त्वरतामार्या । एष जामाता अविधवाभिरभ्यन्तरचतुश्शालं प्रवेश्यते ।

---

१. 'आव'(?) ख. पाठः. २. 'दु दाव अय्या । जा' क. पाठः.

---

* अपुष्पं किमपि गुम्फनप्रसङ्गे हस्तप्राप्तं परिहृत्येत्यर्थः ।

**वासवदत्ता**—(क) अइ! वदामि, गह्ण एदं।

**चेटी**—(ख) हळा![1] वासो ओणअव्वे‡। गच्छामि दाव अहं।

(उभे निष्क्रान्ते)

**वासवदत्ता**[2]—(ग) गदा एसा। अहो अच्चाहिदं। अय्यउत्तो वि णाम परकेरओ संवुत्तो[3]। अविदा* सय्याए मम दुक्खं विणोदेमि, जदि णिद्दं ळभामि।

(निष्क्रान्ता)

तृतीयोऽङ्कः।

---

(क) आयि! वदामि, गृहाणैतत्।

(ख) हला! वास आनेतव्यम्। गच्छामि तावदहम्।

(ग) गतैषा। अहो अत्याहितम्। आर्यपुत्रोऽपिनाम परकीयः संवृत्तः। अविदा शय्यायां मम दुःखं विनोदयामि, यदि निद्रां लभे।

---

१. 'हळा ग' क. पाठः. २. 'त्ता—अ' क. पाठः. ३. 'त्तो। (नि' क. पाठः.

---

‡ 'आणेअव्वे' इति स्यात्। * 'अविदा' इति निर्वेदे।

## अथ चतुर्थोऽङ्कः ।

(ततः प्रविशति विदूषकः)

**विदूषकः**— (सहर्षम्) (क) दिट्ठिआ तत्तहोदो वच्छराअस्स अभिप्पेदविवाहमङ्गळरमणिज्जो काळो दिट्ठो । को णाम एदं जाणादि— तादिसे वयं अणत्थसळिळावत्ते पक्खित्ता उण उम्मज्जिस्सामो त्ति । इदाणिं पासादेसु वसीअदि, अन्देउर-दिग्घिआसु ण्हाईअदि, पळममउरसुउमाराणि मोदअखज्जआणि खज्जीअन्ति त्ति अणच्छरसंवासो उत्तरकुरुवासो मए अणुभ-वीअदि । एक्को खु महन्तो दोसो, मम आहारो सुट्ठु ण परिणमदि । सुप्पच्छदणाए सय्याए णिद्दं ण ळभामि, जह वादसोणिदं अभिदो विअ वत्तदि त्ति पेक्खामि । भो ‡सुहं[1] णामयपरिभूदं अकळ्ळवत्तं च ।

---

(क) दिष्ट्या तत्रभवतो वत्सराजस्याभिप्रेतविवाहमङ्गलरमणीयः कालो दृष्टः । को नामैतज्जानाति—तादृशे वयमनर्थसलिलावर्ते प्रक्षिप्ताः पुनरुन्मङ्क्ष्याम इति । इदानीं प्रासादेषु उष्यते, अन्तःपुरदीर्घिकासु स्नायते, परममधुरसुकुमाराणि मोदकखाद्यानि खाद्यन्त इति अनप्सरस्संवास उत्तरकुरुवासो मयानुभूयते । एकः खलु महान् दोषः, ममाहारः सुष्ठु न परिणमति, सुप्रच्छदनायां शय्यायां निद्रां न लभे, यथा वातशोणितमभित इव वर्तत इति प्रेक्षे । भोः सुखं नामयपरिभूतमकल्यवर्तं च ।

---

१. 'हुण्णा अविभू (?) ख. पाठः.

---

‡आमयपरिभूतं कल्यवर्तशून्यं च सुखं न भवतीत्यर्थः ।

(ततः प्रविशति चेटी)

चेटी — (क) कहिंणुखु गदो अय्यवसन्तओ । (परिक्रम्य[1]) अह्मो[2] एसो वसन्तओ । (उपगम्य[3])अय्य ! वसन्तअ ! को काळो, तुमं अण्णेसामि ।

विदूषकः — (दृष्ट्वा) (ख) किंणिमित्तं भद्दे ! मं अण्णेसासि[4] ।

चेटी— (ग) अह्माणं भट्टिणी भणादि—अवि ह्लादो जामादुओ त्ति ।

विदूषकः — (घ) किंणिमित्तं भोदि[5] ! पुच्छदि* ।

चेटी — (ङ) किं[6]मण्णं । सुमणावण्णअं आणेमि त्ति ।

विदूषकः — (च) ह्लादो तत्तभवं । सव्वं आणेदु भोदी वज्जिअ भोअणं ।

चेटी— (छ) किंणिमित्तं वारेसि भोअणं ।

---

(क) कुत्रनुखलु गत आर्यवसन्तकः । अहो एष वसन्तकः । आर्य वसन्तक ! कः कालस्त्वामन्वेषे ।

(ख) किन्निमित्तं भद्रे ! मामन्वेषसे ।

(ग) अस्माकं भट्टिनी भणति—अपि स्नातो जामातेति ।

(घ) किन्निमित्तं भवति ! पृच्छति ।

(ङ) किमन्यत् । सुमनोवर्णकमानयामीति ।

(च) स्नातस्तत्रभवान् । सर्वमानयतु भवती वर्जयित्वा भोजनम् ।

(छ) किन्निमित्तं वारयासि भोजनम् ।

---

१. 'म्यावलोक्य' ख. पाठः. २. 'अम्मे अय्यव' ख. पाठः. ३. 'सृत्य' ख. पाठः. ४. 'सइ' क. पाठः. ५. 'दी' ख. पाठः. ६. 'किममणसुमतणावणअ आणेदु' (?) ख. पाठः.

---

* भट्टिनीति शेषः ।

**विदूषकः**—(क) अधण्णस्स मम कोइळाणं अक्खिपरिवट्टो विअ कुक्खिपरिवट्टो संवुत्तो।

**चेटी**—(ख) ईदिसो एव्व होहि।

**विदूषकः**—(ग) गच्छदु भोदी। जाव अहं वि तत्तहोदो सआसं गच्छामि।

(निष्क्रान्तौ)

प्रवेशकः।

---

(ततः प्रविशति सपरिवारा पद्मावती[1] आवन्तिकावेषरूपधारिणी वासवदत्ता च)

**चेटी**—(घ) किंणिमित्तं भट्टिदारिआ पमदवणं आअदा।

**पद्मावती**—(ङ) हळा! ताणि[2] दाव सेहाॅलिआगुह्मआणि[3] पेक्खामि कुसुमिदाणि वा ण वेत्ति।

**चेटी**—(च) भट्टिदारिए! ताणि कुसुमिदाणि णाम, पवाळन्तरिदेहिं विअ मोत्तिआलम्बएहिं आइदाणि कुसुमेहिं।

**पद्मावती**—(छ) हळा! जदि एव्वं, किं दाणिं विळम्बेसि।

---

(क) अधन्यस्य मम कोकिलानामक्षिपरिवर्त इव कुक्षिपरिवर्तः संवृत्तः।

(ख) ईदृश एव भव।

(ग) गच्छतु भवती। यावदहमपि तत्रभवतः सकाशं गच्छामि।

(घ) किन्निमित्तं भर्तृदारिका प्रमदवनमागता।

(ङ) हळा! ते तावद् शेफालिकागुल्मकाः प्रेक्षे कुसुमिता वा नवेति।

(च) भर्तृदारिके! ते कुसुमिता नाम, प्रवालान्तरितैरिव मौक्तिकालम्बकैराचिताः कुसुमैः।

(छ) हला! यद्येवं, किमिदानीं विलम्बसे।

---

१. ती वा क. पाठः. २. 'णि से' ख. पाठः ३. 'वा' क. पाठः

*चेटी — (क) तेण हि इमस्सिं सिलावट्टए मुहुत्तअं उपविसदु भट्टिदारिआ। जाव अहं वि कुसुमावचअं करेमि।

पद्मावती — (ख) अय्ये! किं एत्थ उपविसामो।

वासवदत्ता — (ग) एव्वं होदु।

(उभे उपविशतः)

चेटी[१] — (तथा कृत्वा) (घ) पेक्खदु पेक्खदु भट्टिदारिआ।[२] अद्धा मणसिळावट्टएहिं विअ सेहाळिआकुसुमेहि पूरिअं[३] मे अञ्जळिं[४]।

पद्मावती — (ङ) अहो विइत्तदा कुसुमाणं। पेक्खदु पेक्खदु अय्या।

वासवदत्ता[५] — (च) अहो दस्सणीअदा कुसुमाणं।

चेटी — (छ) भट्टिदारिए! किं भूयो अवइणुस्सम्[६]।

पद्मावती — (ज) हळा! मा मा भूयो[७] अवइ[८]णि[९]अ।

---

(क) तेन ह्यस्मिन् शिलापट्टके मुहूर्तकमुपविशतु भर्तृदारिका। यावदहमपि कुसुमावचयं करोमि।

(ख) आर्ये! किमत्रोपविशावः।

(ग) एवं भवतु।

(घ) पश्यतु पश्यतु भर्तृदारिका। अद्धा मनश्शिलापट्टकैरिव शेफालिकाकुसुमैः पूरितो मेऽञ्जलिः।

(ङ) अहो विचित्रता कुसुमानाम्। पश्यतु पश्यत्वार्या।

(च) अहो दर्शनीयता कुसुमानाम्।

(छ) भर्तृदारिके! किं भूयोऽवचेष्यामि।

(ज) हला! मा मा भूयोऽवचित्य।

---

१. 'टी–पे' क. पाठः. २. 'अ(?)मण' ख. पाठः. ३. 'दा' ख. पाठः. ४. 'ञ्जळी' ख. पाठः. ५. 'त्ता- अव्वो(?)। चे' ख. पाठः ६. 'वि अ विउणिस्सं' ख. पाठः. ७. 'रु' ख.पाठः. ८. 'वि' ख. पाठः. ९. 'णु' ख. पाठः.

* 'चेटी' इत्यादि 'उपविशतः' इत्यन्तं ख. पुस्तके नास्ति।

**वासवदत्ता**—(क) हळा! किंणिमित्तं वारेसि।

**पद्मावती**—(ख) अय्यउत्तो* इह आअच्छिअ इमं कुसुमसमिद्धिं पेक्खिअ सम्माणिदा भवेअं[2]।

**वासवदत्ता**—(ग) हळा! पिओ दे भत्ता।

**पद्मावती**—(घ) अय्ये! ण आणामि, अय्यउत्तेण निरहिदा उक्कण्ठिदा[3] होमि।

**वासवदत्ता**—(आत्मगतम्) (ङ) दुक्खरं खु अहं करेमि। इअं वि णाम एव्वं मन्तेदि।

**चेटी**—(च) अभिजादं खु भट्टिदारिआए मन्तिदं—पिओ मे भत्तत्ति।

**पद्मावती**—(छ) एक्को खु मे सन्देहो।

**वासवदत्ता**—(ज) किं किं।

---

(क) हळा! किन्निमित्तं वारयसि।

(ख) आर्यपुत्र इहागत्येमां कुसुमसमृद्धिं दृष्ट्वा सम्मानिता भवेयम्।

(ग) हला! प्रियस्ते भर्ता।

(घ) आर्ये! न जानामि, आर्यपुत्रेण विरहितोत्कण्ठिता भवामि।

(ङ) दुष्करं खल्वहं करोमि। इयमपि नामैवं मन्त्रयते।

(च) अभिजातं खलु भर्तृदारिकया मन्त्रितं।प्रियो मे भर्तेति।

(छ) एकः खलु मे सन्देहः।

(ज) किं किम्।

---

१. 'ह' ख. पाठः. २. 'अ' ख. पाठः. ३. 'दा विअ हो' ख. पाठः. ४. 'जा म' ख. पाठः. ५. 'आ म' ख. पाठः.

---

* 'अय्यउत्तेण' इति पाठो लेखकप्रमादाद् भ्रष्टो भवेत्।

**पद्मावती**—(क) जह मम अय्यउत्तो, तह एव्व अय्याए वासवदत्ताए त्ति ।

**वासवदत्ता**—(ख) अदो वि अधिअं ।

**पद्मावती**—(ग) कहं तुवं जाणासि ।

**वासवदत्ता**—(आत्मगतम्) (घ) हं[1], अय्यउत्तपक्खवादेण अदिक्कन्दो समुदाआरो[2] । एव्वं दाव भणिस्सं । (प्रकाशम्) जइ अप्पो सिणेहो, सा सजणं[3] ण परित्तजदि[4] ।

**पद्मावती**—(ङ) होदव्वं ।

**चेटी**—(च) भट्टिदारिए! साहु भट्टारं भणाहि—अहं पि वीणं सिक्खिस्सामि त्ति ।

**पद्मावती**—(छ) उत्तो[5] मए अय्यउत्तो ।

**वासवदत्ता**—(ज) तदो किं भणिदं ।

---

(क) यथा ममार्यपुत्रस्तथैवार्याया वासवदत्ताया इति ।

(ख) अतोऽप्यधिकम् ।

(ग) कथं त्वं जानासि ।

(घ) हम्, आर्यपुत्रपक्षपातेनातिक्रान्तः समुदाचारः । एवं तावद् भणिष्यामि । यद्यल्पः स्नेहः, सा स्वजनं न परित्यजति ।

(ङ) भवितव्यम् ।

(च) भर्तृदारिके! साधु भर्तारं भण—अहमपि वीणां शिक्षिष्य इति ।

(छ) उक्तो मयार्यपुत्रः ।

(ज) ततः किं भणितम् ।

---

१. 'हा' ख. पाठः. २. 'रो । ओदु । ए' ख. पाठः. ३. 'स्सत्तणं' ख. पाठः. ४. 'इ' ख. पाठः. ५. 'क्तो' क. पाठः.

**पद्मावती** — (क) अभणिअ किञ्चि दिग्घं णिस्सासिअ तुह्णीओ संवुत्तो।

**वासवदत्ता** — (ख) तदो तुवं किं विअ तक्केसि।

**पद्मावती** — (ग) तक्केमि अय्याए वासवदत्ताए गुणाणि सुमरिअ दक्खिणदाए मम अग्गदो ण रोदिदित्ति।

**वासवदत्ता** — (आत्मगतम्) (घ) धण्णा खु ह्मि, जदि एव्वं सच्चं भवे।

(ततः प्रविशति राजा विदूषकश्च)

**विदूषकः** — (ङ) ही ही। पँचिअपडिअबन्धुजीवकुसुमविरळवादरमणिज्जं पमदवणं। इदो दाव भवं।

**राजा** — वयस्य वसन्तक! अयमयँमागच्छामि।

कामेनोज्जायिनीं गते मयि तदा कामप्यवस्थां गते
दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः।
तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः॥ १॥

---

(क) अभणित्वा किञ्चिद् दीर्घं निःश्वस्य तूष्णीकः संवृत्तः।

(ख) ततस्त्वं किमिव तर्कयसि।

(ग) तर्कयाम्यार्याया वासवदत्ताया गुणान् स्मृत्वा दक्षिणतया ममाग्रतो न रोदितीति।

(घ) धन्या खल्वस्मि, यद्येवं सत्यं भवेत्।

(ङ) ही ही प्रचितपतितबन्धुजीवकुसुमविरलपातरमणीयं प्रमदवनम्। इतस्तावद् भवान्।

---

१. 'ती–कि' ख. पाठः. २. 'ह्लि' ख. पाठः. ३. 'किं ति त' ख. पाठः. ४. 'णवविवाहधिअब' ख. पाठः. ५. 'ळसंपातर' ख. पाठः. ६. 'दो इदो दा' ख. पाठः. ७. 'हृ' ख. पाठः.

विदूषकः—(क) कहिंणुखु गदा तत्तहोदी पदुमावदी, ळदामण्डवं गदा भवे, उदाहो असणकुसुमसञ्चिदं वग्घचम्मावगुण्ठिदं विअ पव्वदतिळअणामसिळापट्टअं गदा भवे, आदु अधिअकडुअगन्धसत्तच्छदवणं पविट्ठा भवे, अहव, आळिहिदमिअपक्खिसङ्कुळं दारुपव्वदेअं गदा भवे। (ऊर्ध्वमवलोक्य) ही ही सरअकाळणिम्मळे अन्तरिक्खे पसा(अ?इ)अबळदेवबाहुदंसणीअं सारसपन्तिं जाव समाहिदं गच्छन्तिं पेक्खदु दाव भवं।

राजा—वयस्य! पश्याम्येनाम्,

ऋज्व्वायतां च विरलां च नतोन्नतां च
सप्तर्षिवंशकुटिलां च निवर्तनेषु।
निर्मुच्यमानभुजगोदरनिर्मलस्य
सीमामिवाम्बरतलस्य विभज्यमानाम्॥ २॥

चेटी—(ख) पेक्खदु पेक्खदु भट्टिदारिआ एदं कोकणदमाळापण्डररमणीअं सारसपन्तिं जाव समाहिदं गच्छन्तिं। अम्मो भट्टा।

(क) कुत्रनुखलु गता तत्रभवती पद्मावती, लतामण्डपं गता भवेद्, उताहो असनकुसुमसञ्चितं व्याघ्रचर्मावगुण्ठितमिव पर्वततिलकनामशिलापट्टकं गता भवेद्, अथवा अधिककटुकगन्धसप्तच्छदवनं प्रविष्टा भवेद्, अथवालिखितमृगपक्षिसङ्कुलं दारुपर्वतकं गता भवेद्। ही ही शरत्कालनिर्मलेऽन्तरिक्षे प्रसारितबलदेवबाहुदर्शनीयां सारसपङ्क्तिं यावत् समाहितं गच्छन्तीं प्रेक्षतां तावद् भवान्।

(ख) प्रेक्षतां प्रेक्षतां भर्तृदारिका एतां कोकनदमालापाण्डुररमणीयां सारसपङ्क्तिं यावत् समाहितं गच्छन्तीम्। अम्मो भर्ता।

१. 'इ' ख पाठः. २. 'दग' ख. पाठः. ३. 'आ सारसव(ती?त्ती) जाव समाहिदागच्छदि' ख पाठः. ४. 'णिज्जसारसपन्ती जाव समाहिदा गच्छदि' ख. पाठः.

**पद्मावती**— (क) हळा! अय्यउत्तो। अय्ये! तव कारणादो अय्यउत्तदंसणं परिहरामि। ता इमं दाव माहवीमण्डवं पविसामो।

**वासवदत्ता**— (ख) एव्वं होदु।

(तथा कुर्वन्ति)

**विदूषकः**— (ग) तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा[1] भवे।

**राजा**— कथं भवान् जानाति।

**विदूषकः**— (घ) इमाणि अवइदे[2]कुसुमाणि सेफाळिआगुच्छआणि पेक्खदु दाव भवं।

**राजा**— अहो विचित्रता कुसुमस्य वसन्तक!।

**वासवदत्ता**— (आत्मगतम्) (ङ) वसन्तअसङ्कित्तणेण अहं पुण जाणामि उज्जइणीए वत्तामि त्ति।

**राजा**— वसन्तक! अस्मिन्नेवासीनौ शिलातले पद्मावतीं प्रतीक्षिष्यावहे।

**विदूषकः**— (च) भो! तह। (उपविश्योत्थाय) [3]सरअकाळतिक्खो दुस्सहो आदवो। ता इमं दाव माहवीमण्डवं पविसामो।

---

(क) हला! आर्यपुत्रः। आर्ये! तव कारणादार्यपुत्रदर्शनं परिहरामि। तदिमं तावन्माधवीमण्डपं प्रविशामः।

(ख) एवं भवतु।

(ग) तत्रभवती पद्मावतीहागत्य निर्गता भवेत्।

(घ) इमानपचितकुसुमान् शेफालिकागुच्छकान् प्रेक्षतां तावद् भवान्।

(ङ) वसन्तकसङ्कीर्तनेनाहं पुनर्जानामि उज्जयिन्यां वर्त इति।

(च) भोस्तथा। शरत्कालतीक्ष्णो दुःसह आतपः। तदिमं तावन्माधवीमण्डपं प्रविशावः।

---

१. 'हा अ' ख. पाठः. २. 'दाणि सेफालिआकुसुमाणि पे' ख. पाठः. ३. 'ही ही स' ख. पाठः.

**राजा** — बाढम् । गच्छाग्रतः ।

**विदूषकः** — (क) एव्वं होदु ।

(उभौ परिक्रामतः)

**पद्मावती** — (ख) सव्वं आउळं कत्तुकामो अय्यवसन्तओ । किं दाणिं करेह्म ।

**चेटी** — (ग) भट्टिदारिए ! एदं महुअरपरिणिळीणं ओळंबळदं ओधूय भट्टारं वारइस्सं ।

**पद्मावती** — (घ) एव्वं करेहि ।

(चेटी तथा करोति)

**विदूषकः** — (ङ) अविह अविह, चिट्ठदु चिट्ठदु दाव भवं ।

**राजा** —[1] किमर्थम् ।

**विदूषकः** — (च) दासीएपुत्तेहि महुअरेहि पीडिदो ह्मि ।

**राजा** — मा मा भवानेवम् । मधुकरसन्त्रासः[2] परिहार्यः । पश्य,

मधुमदकला मधुकरा मदनार्ताभिः प्रियाभिरुपगूढाः ।
पादन्यासविषण्णा वयमिव कान्तावियुक्ताः स्युः ॥ ३ ॥

तस्मादिहैवासिष्यावहे ।

---

(क) एवं भवतु ।

(ख) सर्वमाकुलं कर्तुकाम आर्यवसन्तकः । किमिदानीं कुर्मः ।

(ग) भर्तृदारिके ! एतां मधुकरपरिनिलीनामवलम्बलतामवधूय भर्तारं वारयिष्यामि ।

(घ) एवं कुरु ।

(ङ) अविह अविह, तिष्ठतु तिष्ठतु तावद् भवान् ।

(च) दास्याःपुत्रैर्मधुकरैः पीडितोऽस्मि ।

---

१. 'अथकिम्' ख. पाठः. २. 'सं' ख. पाठः.

**विदूषकः** — (क) एव्वं होदु ।

(उभावुपविशतः)

**पद्मावती** — (ख) दिट्ठिआ उवविट्ठो अय्यउत्तो ।

**वासवदत्ता** — (आत्मगतम्) (ग) दिट्ठिआ पकिदित्थसरीरो अय्यउत्तो ।

**चेटी** — (घ) भट्टिदारिए! रुद्धा खु ह्म वयं। भट्टिदारिए! सस्सुपादा खु अय्याए दिट्ठी ।

**वासवदत्ता** — (ङ) एसा खु महुअराणं अविणआदो कासकुसुमरेणुणा पडिदेण सोदआ मे दिट्ठी।

**पद्मावती** — (च) जुज्जइ ।

**विदूषकः** — (छ) भो! सुण्णं खु इदं पमदवणं । पुच्छिदव्वं किञ्चि अत्थि । पुच्छामि भवन्तं ।

**राजा** — छन्दतः ।

---

(क) एवं भवतु ।

(ख) दिष्ट्योपविष्ट आर्यपुत्रः ।

(ग) दिष्ट्या प्रकृतिस्थशरीर आर्यपुत्रः ।

(घ) भर्तृदारिके! रुद्धा खलु स्मो वयम् । भर्तृदारिके! साश्रुपाता खल्वार्याया दृष्टिः ।

(ङ) एषा खलु मधुकराणामविनयात् काशकुसुमरेणुना पतितेन सोदका मे दृष्टिः ।

(च) युज्यते ।

(छ) भोः! शून्यं खल्विदं प्रमदवनम् । प्रष्टव्यं किञ्चिदस्ति । पृच्छामि भवन्तम् ।

**विदूषकः**— (क) का भवदो पिआ, तदाणिं तत्तहोदी वासवदत्ता इदाणिं पदुमावदी वा ।

**राजा**—किमिदानीं भवान् महति बहुमानसङ्कटे मां न्यस्यति ।

**पद्मावती**— (ख) हळा! जादिसे सङ्कडे निक्खित्तो अय्यउत्तो ।

**वासवदत्ता**— (आत्मगतम्) (ग) अहं अ मन्दभाआ ।

**विदूषकः**— (घ) सेरं सेरं भणादु भवं । एक्का उवरदा, अवरा असण्णिहिदा ।

**राजा**—न खलु[1] ब्रूयाम् । भवांस्तु मुखरः ।

**पद्मावती**— (ङ) एत्तएण भणिदं अय्यउत्तेण ।

**विदूषकः**— (च) भो! सव्वेण सवामि, कस्स वि ण आचक्खिस्सं । एसा सन्दट्ठा मे जीहा ।

**राजा**— नोत्सहे सखे! वक्तुम् ।

**पद्मावती**— (छ) अहो इमस्स पुरोभाइदा । एत्तिएण हिअअं[2] ण जाणादि ।

---

(क) का भवतः प्रिया, तदानीं तत्रभवती वासवदत्ता इदानीं पद्मावती वा ।
(ख) हळा! यादृशे सङ्कटे निक्षिप्त आर्यपुत्रः ।
(ग) अहं च मन्दभागा ।
(घ) स्वैरं स्वैरं भणतु भवान् । एकोपरता, अपरा असन्निहिता ।
(ङ) एतावता भणितमार्यपुत्रेण ।
(च) भोः! सर्वेण शपामि, कस्यापि नाख्यास्यामि । एषा सन्दष्टा मे जिह्वा ।
(छ) अहो अस्य पुरोभागिता । एतावता हृदयं न जानाति ।

---

१. 'लु न खलु ब्रू' ख. पाठः. २. 'अं जा' ख. पाठः.

**विदूषकः** — (क) किं ण भणादि[1] मम । अणाचक्खिअ इमादो सिळावट्टआदो ण सक्कं एक्कपदं वि गमिदुं । एसो रुद्धो अत्तभवं ।

**राजा** — किं बलात्कारेण ।

**विदूषकः** — (ख) आम, बळक्कारेण ।

**राजा** — तेन हि पश्यामस्तावत् ।

**विदूषकः** — (ग) पसीददु पसीददु भवं । वअस्सभावेण साविदो, जदि सच्चं ण भणासि ।

**राजा** — का गतिः । श्रूयताम् ।

पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः ।
वासवदत्ताबद्धं न तु तावन्मे मनो हरति ॥ ४ ॥

**वासवदत्ता** — (आत्मगतम्) (घ) भोदु भोदु । दिण्णं वेदणं इमस्स परिखेदस्स । अहो अण्णादवासं पि एत्थ बहुगुणं सम्पज्जइ ।

**चेटी** — (ङ) भट्टिदारिए! अ[2]दक्खिण्णो खु भट्टा ।

---

(क) किं न भणति मम । अनाख्यायास्माच्छिलापट्टकान्न शक्यमेकपदमपि गन्तुम् । एष रुद्धोऽत्रभवान् ।

(ख) आम, बलात्कारेण ।

(ग) प्रसीदतु प्रसीदतु भवान् । वयस्यभावेन शापितः, यदि सत्यं न भणासि ।

(घ) भवतु भवतु । दत्तं वेतनमस्य परिखेदस्य । अहो अज्ञातवासोऽप्यत्र बहुगुणः सम्पद्यते ।

(ङ) भर्तृदारिके! अदाक्षिण्यः खलु भर्ता ।

---

१. 'सि' ख. पाठः. २. 'अदिद' ख. पाठः.

**पद्मावती** — (क) हळा! मा मा एव्वं। सदक्खिण्णो एव्व अय्यउत्तो, जो इदाणिं वि अय्याए वासवदत्ताए गुणाणि सुमरदि।

**वासवदत्ता** — (ख) भद्दे! अभिजणस्स सदिसं मन्तिदं[1]।

**राजा** — उक्तं मया। भवानिदानीं कथयतु। का भवतः प्रिया तदा वासवदत्ता, इदानीं पद्मावती वा।

**पद्मावती** — (ग) अय्यउत्तो[2] पि वसन्तओ संवुत्तो।

**विदूषकः** — (घ) किं मे विप्पळविदेण। उभओ वि तत्तहोदीओ मे बहुमदाओ।

**राजा**[3] — वैधेय! मामेवं बलाच्छ्रुत्वा किमिदानीं नाभिभाषसे।

**विदूषकः** — (ङ) किं मं पि बळक्कारेण।

**राजा** — अथकिम्, बलात्कारेण।

**विदूषकः** — (च) तेण हि ण सक्कं सोदुं।

**राजा** — प्रसीदतु प्रसीदतु महाब्राह्मणः। स्वैरं स्वैरमभिधीयताम्।

---

(क) हला! मा मैवम्। सदाक्षिण्य एवार्यपुत्रः, य इदानीमप्यार्याया वासवदत्ताया गुणान् स्मरति।

(ख) भद्रे! अभिजनस्य सदृशं मन्त्रितम्।

(ग) आर्यपुत्रोऽपि वसन्तकः संवृत्तः।

(घ) किं मे विप्रलपितेन। उभे अपि तत्रभवत्यौ मे बहुमते।

(ङ) किं मामपि बलात्कारेण।

(च) तेन हि न शक्यं श्रोतुम्।

---

१. 'न्तिदव्वं' ख. पाठः. २. 'त्तो व' ख. पाठः. ३. 'जा—अ' ख. पाठः.

**विदूषकः**— (क) इदाणिं सुणादु भवं । तत्तहोदी वासवदत्ता मे बहुमदा । तत्तहोदी पदुमावदी तरुणी दस्सणीआ अकोवणा अणहङ्कारा महुरवाआ सदक्खिण्णा । अअं च अवरो महन्तो गुणो, सिणिद्धेण भोअणेण मं पच्चुग्गच्छइ—कहिंणु-खु गदो अय्यवसन्तओ त्ति ।

**वासवदत्ता**—(ख) भोदु भोदु, वसन्तअ! सुमरेहि दाणिं एदं।

**राजा**—*भवतु भवतु वसन्तक! सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै ।

**विदूषकः**—(ग) अविहा वासवदत्ता । कहिं वासवदत्ता । चिरा खु उवरदा वासवदत्ता ।

**राजा**— (सविषादम्) एवम् । उपरता वासवदत्ता,

अनेन परिहासेन व्याक्षिप्तं मे मनस्त्वया ।
ततो वाणी तथैवेयं पूर्वाभ्यासेन निस्सृता ॥ ५ ॥

**पद्मावती**— (घ) रमणीओ खु कहाजोओ । णिसंसेण विसंवादिदं ।

---

(क) इदानीं शृणोतु भवान् । तत्रभवती वासवदत्ता मे बहुमता । तत्रभवती पद्मावती तरुणी दर्शनीया अकोपना अनहङ्कारा मधुरवाक् सदाक्षिण्या । अयं चापरो महान् गुणः, स्निग्धेन भोजनेन मां प्रत्युद्गच्छति—कुत्रनुखलु गत आर्यवसन्तक इति ।

(ख) भवतु भवतु, वसन्तक! स्मरेदानीमेतत् । [illegible]

(ग) अविहा वासवदत्ता । कुत्र वासवदत्ता । चिरात् खलूपरता वासवदत्ता ।

(घ) रमणीयः खलु कथायोगः । नृशंसेन विसंवादितम् ।

---

* इत आरभ्य 'राजा' इत्यन्तं ख. पुस्तके नास्ति ।

**वासवदत्ता**— (आत्मगतम्) (क) भोदु भोदु, विस्सत्थह्मि । अहो पिअं णाम ईदिसं वअणं अप्पच्चक्खं सुणीअदि ।

**विदूषकः**— (ख) धारेदु धारेदु भवं । अणदिक्कमणीओ हि विही ।

**राजा**—न जानाति भवानवस्थाम् । कुतः;

दुःखं त्यक्तं बद्धमूलोऽनुरागः
स्मृत्वा स्मृत्वा याति दुःखं नवत्वम् ।
यात्रा त्वेषा यद् विमुच्येह बाष्पं
प्राप्तानृण्या याति बुद्धिः प्रसादम् ॥ ६ ॥

**विदूषकः**— (ग) अस्सुपादकिळिण्णं खु तत्तहोदो मुहं । जाव मुहोदअं आणेमि । (निष्क्रान्तः)

**पद्मावती**— (घ) अय्ये ! बप्फ[2]पडळन्तरिदं अय्यउत्तस्स मुहं । जाव णिक्कमह्म ।

**वासवदत्ता**— (ङ) एव्वं[3] होदु । अहव चिट्ठ तुवं । उक्कण्ठिदं भत्तारं उज्झिअ अजुत्तं णिग्गमणं[4] । अहं एव्वं[5] गमिस्सं ।

---

(क) भवतु भवतु, विश्वस्तास्मि । अहो प्रियं नामेदृशं वचनमप्रत्यक्षं श्रूयते ।

(ख) धारयतु धारयतु भवान् । अनतिक्रमणीयो हि विधिः ।

(ग) अश्रुपातक्लिन्नं खलु तत्रभवतो मुखम् । यावन्मुखोदकमानयामि ।

(घ) आर्ये ! बाष्पपटलान्तरितमार्यपुत्रस्य मुखम् । यावन्निष्क्रामामः ।

(ङ) एवं भवतु । अथवा तिष्ठ त्वम् । उत्कण्ठितं भर्तारमुज्झित्वायुक्तं निर्गमनम् । अहमेव गमिष्यामि ।

---

१. 'त' ख. पाठः. २. 'प्फाउळपडन्तदिदं' क. पाठः. ३. 'वं' क.पाठः. ४. 'मं । अ' ख. पाठः. ५. 'व' क. पाठः.

**चेटी** — (क) सुट्ठु अय्या भणादि । उवसप्पदु दाव भट्टिदारिआ ।

**पद्मावती** — (ख) किंणुखु[1] पविसामि ।

**वासवदत्ता** — (ग) हळा! पविस[2] । (इत्युक्त्वा निष्क्रान्ता)

(प्रविश्य)

**विदूषकः** — (नलिनीपत्रेण[3] जलं गृहीत्वा) (घ) एसा[4] तत्तहोदी पदुमावदी ।

**पद्मावती** — (ङ) अय्य वसन्तअ! किं एदं ।

**विदूषकः**[5] — (च) एदं इदं । इदं एदं ।

**पद्मावती** — (छ) भणादु भणादु अय्यो भणादु ।

**विदूषकः** — (ज) भोदि! वादणीदेण कासकुसुमरेणुणा अक्खिणिपडिदेण[6] सस्सुपादं खु तत्तहोदो मुहं । ता गह्णदु होदी[7] इदं मुहोदअं ।

---

(क) सुष्ठ्वार्या भणाति । उपसर्पतु तावद् भर्तृदारिका ।

(ख) किन्नुखलु प्रविशामि ।

(ग) हला! प्रविश ।

(घ) एषा तत्रभवती पद्मावती ।

(ङ) आर्य वसन्तक! किमेतत् ।

(च) एतदिदम् । इदमेतत् ।

(छ) भणतु भणत्वार्यो भणतु ।

(ज) भवति! वातनीतेन काशकुसुमरेणुनाक्षिनिपतितेन साश्रुपातं खलु तत्रभवतो मुखम् । तद् गृह्णातु भवतीदं मुखोदकम् ।

---

१. 'किं प' ख. पाठः. २. 'स । (नि' ख. पाठः. ३. 'त्रे ज' ख. पाठः. ४. 'ऐ त' क. पाठः. ५. 'कः—भोदि! ए' ख. पाठः. ६. 'ण अस्सुपादकिलिण्णं खु' ख. पाठः. ७. 'भो' ख. पाठः.

**पद्मावती** — (क) अहो[1] सदक्खिणस्स जणस्स परिजणो वि सदक्खिण्णो एव्व होदि[2] । (उपेत्य) जेदु अय्यउत्तो । इदं मुहोदअं ।

**राजा** — अये पद्मावती । (अपवार्य) वसन्तक! किमिदम् ।

**विदूषकः** —(कर्णे) (ख) एव्वं विअ ।

**राजा** —साधु वसन्तक! साधु । (आचम्य) पद्मावति! आस्यताम् ।

**पद्मावती** — (ग) जं अय्यउत्तो आणवेदि । (उपविशति)

**राजा** — पद्मावति!

शरच्छशाङ्कगौरेण[3] वाताविद्धेन भामिनि! ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥ ७ ॥

(आत्मगतम्)

इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत् ।
कामं[4] धीरस्वभावेयं स्त्रीस्वभावस्तु कातरः ॥ ८ ॥

**विदूषकः** — (घ) इदं* तत्तहोदो मअधराअस्स अवरह्णकाळे

(क) अहो सदाक्षिण्यस्य जनस्य परिजनोऽपि सदाक्षिण्य एव भवति । जयत्वार्यपुत्रः । इदं मुखोदकम् ।

(ख) एवमिव ।

(ग) यदार्यपुत्र आज्ञापयति ।

(घ) इदं तत्रभवतो मगधराजस्यापराह्णकाले भवन्तमग्रतः कृत्वा सुहृज्जनद-

१. 'अ' ख. पाठः. २. 'दि । विदूषकः- जेदु भवं । पद्मावती – जेदु अय्यउत्तो । रा' ख. पाठः. ३. 'रा(ज)च्छ' ख. पाठः. ४. 'मधी' क. पाठः.

* इदं सन्निकृष्टमित्यर्थः.

भवन्तं अग्गदो करिअ सुहिज्जणदंसणं । सक्कारो हि णाम सक्कारेण पडिच्छिदो पीदिं उप्पादेदि । ता उट्ठेदु दाव भवं ।

**राजा** — बाढम्[1] । प्रथमः कल्पः । (उत्थाय)

गुणानां वा विशालानां सत्काराणां च नित्यशः ।
कर्तारः सुलभा लोके विज्ञातारस्तु[2] दुर्लभाः ॥ ९ ॥

(निष्क्रान्ताः सर्वे)

चतुर्थोऽङ्कः ।

---

र्शनम् । सत्कारो हि नाम सत्कारेण प्रतीष्टः प्रीतिमुत्पादयति । तदुत्तिष्ठतु तावद् भवान् ।

---

१. 'म् उ' ख. पाठः. २. 'प्र' ख. पाठः.

## अथ पञ्चमोऽङ्कः ।

(ततः प्रविशति पद्मिनिका)

**पद्मिनिका**—(क) महुअरिए ! महुअरिए ! आअच्छ दाव सिग्घं ।

(प्रविश्य)

**मधुकरिका**— (ख) हळा ! इअह्मि । किं करीअदु ।

**पद्मिनिका**[1] — (ग) हळा ! किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी सीसवेदणाए[2] दुक्खाविदे[3] त्ति ।

**मधुकरिका**— (घ) हद्धि ।

**पद्मिनिका**— (ङ) हळा ! गच्छ सिग्घं, अय्यं[4] आवन्तिअं सद्दावेहि । केवळं भट्टिदारिआए सीसवेदणं[5] एव्व णिवेदेहि । तदो सअं एव्व आगमिस्सदि ।

**मधुकरिका**— (च) हळा ! किं सा करिस्सदि ।

**पद्मिनिका**— (छ) सा हु दाणिं[6] महुराहि कहाहि भट्टिदारिआए सीसवेदणं विणोदेदि ।

---

(क) मधुकारिके ! मधुकारिके ! आगच्छ तावच्छीघ्रम् ।

(ख) हला! इयमास्मि । किं क्रियताम् ।

(ग) हला ! किं न जानासि त्वं भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति ।

(घ) हा धिक् ।

(ङ) हला ! गच्छ शीघ्रमार्यामावन्तिकां शब्दय । केवलं भर्तृदारिकायाः शीर्षवेदनामेव निवेदय । ततः स्वयमेवागमिष्यति ।

(च) हला! किं सा करिष्यति ।

(छ) सा खल्विदानीं मधुराभिः कथाभिः भर्तृदारिकायाः शीर्षवेदनां विनोदयति ।

---

१. 'का—किं' ख. पाठः. २. 'स्स' ख. पाठः. ३. 'दा' ख. पाठः. ४. 'य्यं' क. पाठः. ५. 'अ' ख. पाठः. ६. 'णि' क. पाठः.

**मधुकरिका** — (क) जुज्जइ । कहिं सअणीयं रइदं भट्टि-दारिआए ।

**पद्मिनिका** — (ख) समुद्दगिहके किळ सय्यात्तिण्णा । गच्छ दाणि तुवं । अहं वि भट्टिणो णिवेदणत्थं अय्यवसन्तअं अण्णेसामि ।

**मधुकरिका** — (ग) एव्वं होदु । (निष्क्रान्ता)

**पद्मिनिका** — (घ) कहिं दाणिं अय्यवसन्तअं पेक्खामि ।

(ततः प्रविशति विदूषकः)

**विदूषकः** — (ङ) अज्ज[2] खु देवीविओअविहुरस्स तत्त-होदो वच्छराअस्स पदुमावदीपाणिग्गहणसमीरिअस्स[3] अच्चन्त-सुहावहे[4] मङ्गळोसवे मदणग्गिदाहो[5] अहिअदरं वड्ढइ[6] । (पद्मिनिकां विलोक्य) अयि पदुमिणिआ । पदुमिणिए! किं इह वत्तदि[7] ।

---

(क) युज्यते । कुत्र शयनीयं रचितं भर्तृदारिकायाः ।

(ख) समुद्रगृहके किल शय्यास्तीर्णा । गच्छेदानीं त्वम् । अहमपि भर्त्रे निवेदनार्थमार्यवसन्तकमन्वेषे ।

(ग) एवं भवतु ।

(घ) कुत्रेदानीमार्यवसन्तकं प्रेक्षे ।

(ङ) अद्य खलु देवीवियोगविधुरस्य तत्रभवतो वत्सराजस्य पद्मावतीपाणिग्रहणसमीरितस्यात्यन्तसुखावहे मङ्गलोत्सवे मदनाग्निदाहोऽधिकतरं वर्धते । अयि पद्मिनिका । पद्मिनिके! किमिह वर्तते ।

---

१. 'ळ अत्थिण्णा' ख. पाठः. २. 'ज्ज वि हु देवीविओअविहुराहिअअस्स' ख. पाठः. ३. 'आअमाणो अच्च' ख. पाठः. ४. 'हे वमङ्गळमोणममण' क. पाठः. ५. 'णदो' ख. पाठः. ६. 'इइ । (विलोक्य) पदुमाणिए!' ख. पाठः. ७. 'इसि ।' ख. पाठः.

पद्मिनिका — (क) अय्य! वसन्तअ! किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी सीसवेदणाए दुःखाविदेत्ति।

विदूषकः — (ख) भोदि! सच्चं ण जाणामि।

पद्मिनिका — (ग) तेण हि भट्टिणो णिवेदेहि णं। जाव अहं वि सीसाणुळेवणं तुवारेमि।

विदूषकः — (घ) कहिं सअणीअं रइदं पदुमावदीए।

पद्मिनिका — (ङ) समुद्दगिहके किळ सय्यत्तिण्णा।

विदूषकः — (च) गच्छदु भोदी। जाव अहं वि तत्तहोदो णिवेदइस्सं।

(निष्क्रान्तौ)

(प्रवेशकः)

---

(ततः प्रविशति राजा)

राजा —

श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां
कालक्रमेण पुनरागतदारभारः।

---

(क) आर्य! वसन्तक! किं न जानासि त्वं भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति।

(ख) भवति! सत्यं न जानामि।

(ग) तेन हि भर्त्रे निवेदयैनाम्। यावदहमपि शीर्षानुलेपनं त्वरयामि।

(घ) कुत्र शयनीयं रचितं पद्मावत्याः।

(ङ) समुद्रगृहके किल शय्यास्तीर्णा।

(च) गच्छतु भवती। यावदहमपि तत्रभवते निवेदयिष्यामि।

---

१. 'दे' क. पाठः. २. 'हि सिग्घं भ' ख. पाठः. ३. 'हि। जा' ख. पाठः. ४. 'गि' ख. पाठः.

लावाणके हुतवहेन हृताङ्गयष्टिं
तां पद्मिनीं हिमहतामिव चिन्तयामि ॥ १ ॥

(प्रविश्य)

**विदूषकः —** (क) तुवरदु तुवरदु दाव भवं ।

***राजा —** किमर्थम् ।

**विदूषकः —** (ख) तत्तहोदी पदुमावदी §सीसवेदणाए दुक्खाविदा ।

**राजा —** कैवमाह ।

**विदूषकः —** (ग) पदुमिणिआए कहिदं ।

**राजा —** भोः ! कष्टं,

रूपश्रिया समुदितां गुणतश्च युक्तां
लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।
‡पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः
पद्मावतीमपि तथैव समर्थयामि ॥ २ ॥

अथ कस्मिन् प्रदेशे वर्तते पद्मावती ।

**विदूषकः —** (घ) समुद्दगिहके किळ सय्यात्त्[1]िण्णा ।

---

(क) त्वरतां त्वरतां तावद् भवान् ।

(ख) तत्रभवती पद्मावती शीर्षवेदनया दुःखिता ।

(ग) पद्मिनिकया कथितम् ।

(घ) समुद्रगृहके किळ शय्यास्तीर्णा ।

---

१. 'त्थि' ख. पाठः.

---

* 'राजा' इत्यादि 'दु' इत्यन्तं क. पुस्तके त्रुटितम् । § 'सीदनदणाए' (?) इति ख. पुस्तके दृश्यते । ‡ पूर्वाभिघातसरुजोऽपि अनुवर्तमानपूर्वाभिघातपीडस्यापीत्यर्थः ।

**राजा**— तेन हि तस्य मार्गमादेशय ।

**विदूषकः**— (क) एदु एदु भवं ।

(उभौ परिक्रामतः)

**विदूषकः**— (ख) इदं समुद्दगिहकं । पविसदु[1] भवं ।

**राजा**— पूर्वं प्रविश ।

**विदूषकः**— (ग) भो ! तह । (प्रविश्य) अविहा चिट्ठदु चिट्ठदु दाव भवं ।

**राजा**— किमर्थम् ।

**विदूषकः**— (घ) एसो खु दीवप्पभाव[2]सूइदरूवो वसुधातळे परिवत्तमाणो अअं काओदरो ।

**राजा**[3]— (प्रविश्यावलोक्य सस्मितम्) अहो सर्पव्यक्तिर्वैधेयस्य[4] ।

ऋज्वायतां च मुखतोरणलोलमालां
भ्रष्टां क्षितौ त्वमवगच्छसि मूर्ख ! सर्पम् ।
मन्दानिलेन निशि या परिवर्तमाना
किञ्चित् करोति भुजगस्य विचेष्टितानि ॥ ३ ॥

**विदूषकः**— (निरूप्य) (ङ) सुट्ठु भवं भणादि । ण हु अअं

(क) एत्वेतु भवान् ।

(ख) इदं समुद्रगृहकम् । प्रविशतु भवान् ।

(ग) भोः ! तथा । अविहा तिष्ठतु तिष्ठतु तावद् भवान् ।

(घ) एष खलु दीपप्रभावसूचितरूपो वसुधातले परिवर्तमानोऽयं काकोदरः ।

(ङ) सुष्ठु भवान् भणति । न खल्वयं काकोदरः । तत्रभवती पद्मावतीहागत्य निर्गता भवेत् ।

१. 'दु दाव भ' ख. पाठः. २. 'भासू' ख. पाठः. ३. 'जा—अ' क. पाठः. ४. 'स्य । कुतः—ऋ' ख. पाठः. ५. 'तांगिमु' ख. पाठः.

